अपने द्वारा जीती गई शिव के मस्तक पर दृढ़ता से जड़ी हुई चन्द्रकला को अपने दोनों हाथों को ऊपर उठाकर शिव को आलिङ्गन सुख प्रदान करती हुई पार्वती के उन्नत स्तनों में चञ्चल दृष्टि डालते हुये और चन्द्रकला के निकालने के उपक्रम में शिव विलम्ब करते है जिससे पार्वती का आलिङ्गन सुख देर तक मिलता रहे। (श्लोक 1158)। कई मङ्गलाचरणों में शिवशिवालाप का सुन्दर चित्रण है। शिवा के प्रणय कोप और शिव के अनुनय का चित्रण है। शिव पार्वती को मनाने के लिये उनके चरणों में सिर रख देते हैं, उनके चरणों को अपनी जटाओं से पोंछते है मानो मस्तक पर लगी भस्म से चरण रूषित हो गये हो, चन्द्रमा की किरणों से चरणों को सींचते है मानो उनके नेत्रानल से चरण तप्त हो गये हों, तथा गंगाजल से धोते है मानों सापों की साँस से चरण मलिन हो गये हों (श्लोक 608)। द्यूतक्रीडा में परास्त हुये शिव से पार्वती का विनोद वचन इस प्रकार है- वे कहती है कि मैने तुम्हारा खट्वाङ्ग, परशु, वृष (नन्दी), चन्द्रकला इत्यादि सर्वस्व जो जीत लिया है वह सब तुम्हें वापस करती हूँ किन्तु यह जल बहाने वाली गङ्गा मेरी दासी बनेगी। शिव भगवान् विष्णु से अपने परिवार के दुःख के विषय में कहते हैं- कि मेरा परिवार और परिकर परस्पर इतने विरोधी है कि मेरे गणेश का वाहन मूषक मेरे भस्म और सूत्र को हरना चाहता है, मेरा सर्प मूषक को खाना चाहता है, कार्तिकेय का मयूर उस सर्प को खाना चाहता है, पार्वती का सिंह मेरे वाहन वृषभ को खाना चाहता है, गङ्गा जी चन्द्रमा को डुबोना चाहती है इस प्रकार हे भगवान् यह रात-दिन का दुःख कैसे सहूँ (श्लोक 503)। इस प्रकार आदि दम्पती शिव के परिणय एवं विलास के क्षणों को भी कवि ने अपनी भक्तिपूर्ण दृष्टि से ओझल नहीं होने दिया। पति-पत्नी के झगड़ो के प्रसङ्ग, शिव के हास्य के क्षणों का कवि बड़ी ही सुन्दरता से चित्रण करता है, अपने इष्ट के किसी भी रूप का वर्णन करने में कवि के मन में सहज सुन्दर सात्विक भाव ही रहते है जो मङ्गल की कामना ही करते है। शिव की जटाओं, शिर, हाथ, चरण, लोचन, मुख, कण्ठ, वक्षस्थल के अतिरिक्त उनके शस्त्रों में बाण, त्रिशूल तथा शिवकेतु, शिवगण आदि से भी कल्याण की प्रार्थना की गई है। शिव का नृत्त ताण्डव है जिसे शिव सन्ध्या समय में करते है। नृत्त के समय उनके अलङ्करण के लिये सेवकगण उनके परम परिचित आभूषण (अस्थि, गजचर्म, भस्म, चन्द्रमा, गङ्गा, सर्प) लाने के लिये एक दूसरे से कहते हैं (श्लोक 1207)। नटराज शिव के महाताण्डव के समय होने वाली ब्रह्माण्ड रूपी हलचल का वर्णन कवि कुछ इस प्रकार करता है- शिव के ताण्डव करने पर सातों समुद्र क्षुब्ध हो जाते हैं, सिर में स्थित गङ्गा से हजारों झरने बहने लगते हैं, पर्वत डगमगाने लगते हैं, उनके केशों में तारागण टूट टूट कर फँस जाते हैं, पृथ्वी धँसने लगती है, देव एवं दैत्य भयभीत होकर हा- हा कर उठते

हैं (श्लोक 1217)। शब्द-वैचित्र्य का सुन्दर चित्रण मङ्गलाचरणों में प्राप्त होता है। श्लोक 559 में प्रत्येक शब्द काक्षर से प्रारम्भ हुआ है। ताण्डव के समय कङ्कण की झंकार, नूपुरों का क्वणन् , दुन्दुभि की ध्वनि का सुन्दर ध्वन्यात्मक वर्णन किया है (श्लोक 1222 तथा 1226)।

शिवपुत्र कार्त्तिकेय के सम्बन्ध में कवि के उद्गार है कि श्लाघ्य पुत्र वही होता है जो गुणों में पिता से अधिक हो इसी कारण कार्त्तिकेय ने पञ्चवक्त्र शिव (पिता) से एक अधिक शिर धारण किया इस प्रकार कार्त्तिकेय के षडानन होने की सुन्दर कल्पना वाला मङ्गलाचरण 10वीं शताब्दी के अभिलेख में मिलता है।

रुद्रावतार हनुमान् के मङ्गलाचरणों में वे वज्राङ्ग, कपीश, पिङ्गाक्ष, काञ्चनाभ तथा पीतवस्त्रधारी पवनपुत्र हैं (श्लोक 1410)। उनके क्रोध का दर्शन कवि लङ्कादहन के समय करता है (1401)। निराशा की स्थिति में हनुमान् आशा के सञ्चारक हैं। कपिकुल में निराशा थी कि कौन समुद्र को पार करेगा, कौन सञ्जीवनी लायेगा तब श्रीहनुमान् ने ही सबकी निराशा को दूर कर दोनों कार्य किये (1402)। उनकी पूछँ की आक्रामकता का सुन्दर सजीव चित्रण किया गया है (1404)। रामदूत मारुतिनन्दन के बहुशः मङ्गलाचरण वाल्मीकिरामायण के टीकाकार रामभट्ट ने 'विषमपदव्याख्या' में किये हैं।

भूमिका के अन्तिम चरण में निवेदन है कि प्रस्तुत ग्रन्थ 'मङ्गलमणिमाला' प्रथमभाग है। द्वितीय भाग में परब्रह्म, ब्रह्मा, विष्णु, विष्णु के दशावतार, आदि के मङ्गलाचरणों को समाहित किया गया है, शक्ति के विभिन्न रूपों तथा अन्यान्य प्रकीर्ण मङ्गलाचरणों को तृतीय भाग में समाहित किये जाने की योजना है जो शीघ्र ही प्रकाश्य है।

ग्रन्थ को प्रकाशित रूप में देखना कितना आनन्दप्रद है इसकी कल्पना कोई समानधर्मी ही कर सकता है। इसकी पूर्णता में सहायक लोगों की सहायताओं से मेरा हृदय अभिभूत है, फिर भी शब्दों में कृतज्ञता ज्ञापित करने की परम्परा का निर्वाह करते हुये सर्वप्रथम हम इस विद्यापीठ के प्राचार्य डॉ0 गयाचरण त्रिपाठी महोदय के हृदय से आभारी हैं जिन्होंने अपने योजना-निदेशक के रूप में हमारे हाथों से इस मङ्गलकार्य को सम्पन्न कराया और अपने वैदुष्यपूर्ण परामर्शों से निरन्तर कृतार्थ किया। व्याकरणाचार्य पं0 सत्यानन्द शुक्ल (विभागाध्यक्ष श्री नारायणनागानिरङ्कारी संस्कृत महाविद्यालय फतेहपुर) के हम विशेष आभारी हैं जिन्होंने व्याकरणगत समस्याओं का निदान पग-पग पर कर मुझे सहयोग दिया। मेरे पति श्री अरुण कुमार मिश्र तथा परिवार के अन्य सदस्यों का सक्रिय सहयोग विशेष उल्लेखनीय है। मेरे पूर्व सहयोगी एवं वर्तमान में राष्ट्रिय संस्कृत

संस्थान में सहायक -निदेशक डॉ0 प्रकाश पाण्डेय को कोटिशः धन्यवाद देती हूँ जिन्होंने पदे-पदे मुझे सहयोग दिया और सारस्वत-साधना की सदा प्रेरणा दी इसकी पूर्णता में माँ का आशीर्वाद, गुरुजनों का स्नेह, मित्रों की प्रेरणा तथा अपना दीर्घकालिक श्रम भी कारणभूत हैं। इन सबके पीछे भी ईश्वरेच्छा ही मूल कारण है, किन्तु जब यह कृति सहृदय पाठकों के गले का कण्ठहार बनेगी तभी वस्तुतः हमारे परिश्रम की सार्थकता होगी।

मैं श्री विनोद द्विवेदी की हृदय से आभारी हूँ जिन्होंने अथक परिश्रम से, व्यक्तिगत रुचि लेकर बहुत ही कम समय में इस कठिन ग्रन्थ के मुद्रण के महत्त्वपूर्ण दायित्व का निर्वहण किया।

अन्ततः मानव स्वभावसुलभ प्रमादवश ग्रन्थ में किसी भी प्रकार की जो त्रुटियाँ हो गई हैं उनके लिए विद्वज्जनों से क्षमाप्रार्थी हूँ अगले संस्करण में इन्हें अवश्य सुधार लिया जायेगा। हस्तलेखों के अन्त में प्रायः उद्धृत निम्नश्लोक के द्वारा पुनः सहृदय पाठकों से क्षमा चाहूँगी -

अज्ञानदोषान्मतिविभ्रमाद्वा
यदर्थहीनं कुरुते मयात्र।
तत्सर्वमार्यैः परिशोधनीयं
कोपन्न कुर्यात् खलु लेखकस्य।।

सर्वविधमङ्गलाशंसनार्थ निम्न श्लोक भी इन्हीं स्रोतों से उदद्धृत है-

मङ्गलं लेखकानां तु, पाठकानां च मङ्गलम् ।
मङ्गलं सर्वभूतानां, भूमि-भूपति-मङ्गलम् ।।

इन्हीं मङ्गलमय कामनाओं के साथ

- डॉ0 बीना मिश्रा

# ग्रन्थसङ्केत-सूची

शा०प० शार्ङ्गधरकृत- *शार्ङ्गधरपद्धतिः* संपादकः पीटर पीटर्सन, पुनर्मुद्रणम्, देहली- १९८७

सदुक्ति० श्रीधरदासकृत- *सदुक्तिकर्णामृतम्*, संपादकः सुरेशचन्द्र बैनर्जी, कलकत्ता- १९६५

सुभा० वल्लभदेवकृत- *सुभाषितावलिः* संपादकः पीटर पीटर्सन, पुनर्मुद्रणम्, पुणे- १९६१

सुभा०सुधा०भा० शिवदत्त कविरत्न-संगृहीतः *सुभाषितसुधा-रत्नभाण्डागारः* मुम्बई, संवत् - १९८५

सुभा०सुधा० सायणकृत- *सुभाषित-सुधानिधिः*, संपादकः के० कृष्णमूर्त्तिः, धारवाड़- १९६८

सूक्तिमु० भगदत्तजल्हणकृत- *सूक्तिमुक्तावली*, संपादकः एम्बर कृष्णमाचार्य, बडोदरा- १९३८

स्तुतिकु० जगद्धरकृत- *स्तुतिकुसुमाञ्जलिः*, अच्युत-ग्रन्थमाला- कार्यालय, काशी- १९६४



# ॥ मङ्गलमणिमाला ॥



## गणेशः

1. अतिसुदृढमगातां हर्षमङ्कैकभावा-
दधिकतममुमेशौ यं तथात्मैकयोगात्।
तदधिकमिव यातौ यं सुतं वीक्ष्यमाणौ
सफलयतु स देवो वः क्रतुं वक्रतुण्डः॥
—विष्णुभक्तिकल्पलतायां पुरुषोत्तमाचार्यस्य

2. अद्वैतमेव परमार्थतया विवेक्तु-
मङ्गीकृतद्विपनराकृतिसन्निवेशः।
अद्वैतगोचरमशेषविशेषमन्त-
राविष्करोतु वरदो मम विघ्नराजः॥
—अद्वैतरसमञ्जर्यां नल्लासुधियः

3. अनस्तप्रतापः समस्तक्षमायाम्
निरस्तस्वकीयामयस्त्रस्तपापः।
स सिन्दूरमस्तः सदादत्तशस्तः
प्रशस्तः स नः पाशहस्तः श्रिये स्तात्॥
—अमरकाव्ये रणछोड़भट्टस्य

4. अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥
—कामन्दकीयनीतिसारे कामन्दकेः

5. अमन्दानन्दसन्दोहदायकं गणनायकम्।
वन्दे वन्दारुमन्दारमिन्दुभूषणनन्दनम्॥
—चालुक्यराजअय्यणमहाकाव्ये

6. अलिकुलसङ्कुलगण्डं धृतशशिखण्डं वरं देवम्।
वन्दे सुन्दरशुण्डं द्विरदतुण्डं च॥

—वैद्यविलासे रघुनाथपण्डितस्य

7. अविरलमदजलनिवहं भ्रमरकुलानीकसेवितकपोलम्।
अभिमतफलदातारं कामेशं गणपतिं वन्दे॥

—जन्मपत्रलेखक्रमे दिवाकरात्मजविश्वनाथस्य

8. अविरलमदधाराभासितोतुङ्गगण्ड-
स्थलमधुरतरोद्यद्टाध्वानगुञ्जद्द्विरेफः।
भवजलनिधिमग्नाराधिताङ्घ्रिद्वयाजो
गणपतिरवतु त्वां विघ्नवल्लीकुठारः॥

—प्रशस्तिपत्रिकायाम्

9. अविरलविगलन्मदजलकपोलपालीनिलीनमधुपकुलः।
उद्भिन्ननवश्मश्रुश्रेणिरिव गणाधिपो जयति॥

—काव्यालङ्कारे रुद्रटस्य

10. अव्याद्वो विघ्नविध्वंसकीर्त्तिस्तम्भमिवोत्क्षिपन्।
करं गणपतिः क्रीडानीलभृङ्गाक्षरावलिम॥

—कथासरित्सागर द्वादशे लम्बके सोमदेवभट्टस्य

11. इष्टार्थप्राप्तिसन्तुष्टैः प्रणतं नाकिनां गणैः।
आर्यं विघ्नतमस्सूर्यं गणेशं भजतानिशम॥

—येनमदलाभिलेखे गणपतेः

12. उद्दामोत्तुङ्गमूषाधिपयुगल- समाकृष्टिझाङ्कारनाद-
क्षुभ्यद्दैत्यारिदृष्टच्छविलुलितरस्यन्दनेन्द्राधिरुढः।
लोलत्कर्णाभिघातोद्धतमदसलिलामोदमाद्यद्द्विरेफ-
व्रातोद्गीतस्तवो नः स दहतु कलुषं ढुण्ढिराजो गणेशः॥

—रत्नवल्यां कृष्णपण्डितस्य

13. उद्यन्मार्तण्डरागं प्रवरतरकराक्रान्तदिक्प्रान्तनागम्
तारा यत्पुष्करात्खे स्फुरदमलतराः सीकराभान्त्यपाराः।
स्वीया लोका विशोकाः सकलसुखयुता यत्पदाब्जस्मृतेः स्युः
प्रत्यूहव्यूहकालं विबुधवरनुतं तं नमामो गणेशम्॥

—करणकौस्तुभे कृष्णदैवज्ञस्य

14. ऊर्ध्वीकृतः सुरसरित्सलिलावगाह-
दुर्दण्डचण्डतरचारुकरो विभाते।
ब्रह्माण्डमण्डलमहोत्पलनाललीलां
विभ्रत्स वो गणपतेरवतादजस्रम्॥

—मल्हाराभिलेखे जाजल्लदेवस्य

15. एकदन्तमुमापुत्रं गजवक्त्रं त्रिलोचनम्।
चन्द्रार्द्धधारिणं वन्दे सर्वविघ्नविपत्तये॥

—शैवकल्पद्रुमे लक्ष्मीचन्द्रमिश्रस्य

16. एकरद द्वैमातुर निस्त्रिगुणचतुर्भुजापि पञ्चकार।
जय षण्मुखनुत सप्तच्छदगन्धिमदाष्टतनुतनय॥

—सुभा० सुधा० भा०

17. ओङ्कारप्रतिपादितं सुरनुतं भक्तानुकम्पायतुम्
दोः पद्मे दधतं दतं हरसुतं श्वैत्यं भजन्तं तनौ।
ज्ञानाच्छादितमोपहं कविमहं सोऽहं धिया गं मनौ
ध्येयं देहभृतां भयच्छिदमजं भक्त्या भजामीश्वरम्॥

—सत्याषाढकृतश्रौतसूत्रस्य व्याख्यायां
वैजयन्तीसमाख्यायां महादेवस्य

18. कपोलतटनिस्सरत्सुरभिदानवारापगा-
तरङ्गततिमज्जनैर्विरजसो द्विरेफाङ्गनाः।
स्तुवन्ति यमिहादरादुचितझङ्क्रिया भाषया
निहन्तु शिवनन्दनो निखिलमन्तरायं स नः॥

—चम्पूरामायणव्याख्याने करुणाकरस्य

19. कपोलतलनिर्गतप्रमदवारिधारालुठद्-
भ्रमद्भ्रमरकाकलीकलितमञ्जुकोलाहलः।
गिरीशतनयो गुरुः सकलसिद्धिवारांनिधि-
र्भिनत्तु दुरितानि नः सततमोदकादः सदा॥

—क्षेमकुतूहले क्षेमशर्मणः

20. कर्णतालबलाघातसीमन्तितकुलाचलः।
पन्थानमिव सिद्धीनां दिशञ्जयति विघ्नजित्॥

—कथासरित्सागरे चतुर्थे लम्बके सोमदेवभट्टस्य

21. कर्पूरकुण्डधवलं विलसत्त्रिनेत्रम्
दन्ताक्षसूत्रशुभमोदकपर्शुहस्तम्।
नागाननं सकलसिद्धिकरं गणेशम्
लम्बोदरं प्रणतविघ्नहरं नमामि॥

—श्वेतकालीमातृकास्तोत्रे

22. कल्याणानि करोतु वः स भगवान् कात्यायनीनन्दनो
यस्याभ्यन्तरमम्बिकाजनकयोर्यातस्य लीलाविधौ।
साकं भाति तदाननैर्मुखततिः छायाधिपस्पर्द्धया
स्वात्मानं बहुधेव संभृतवतश्चन्द्रस्य बिम्बावलिः॥

—अद्वैतविद्यातिलके समरपुङ्गवदीक्षितस्य

23. कल्याणानि ददातु वो गणपतिर्यस्मिन्नतुष्टे सति
क्षोदीयस्यपि कर्मणि प्रभवितुं ब्रह्मापि जिह्मायते।
जाते यच्चरणप्रतापसुलभे सौभाग्यभाग्योदये-
रङ्कस्याङ्कमनङ्कुशा निविशते देवेन्द्रलक्ष्मीरपि॥

—चतुर्वर्गचिन्तामणौ दानखण्डे हेमाद्रिसूरेः

24. कल्याणाय गणाधीशः कारुण्याम्भोधिरस्तु वः।
सदा गण्डस्थली यस्य सरसा दानकुल्यया॥

—दण्डपल्याभिलेखे विजयभूपतेः

25. कल्याणाय चतुर्भुजोऽस्तु जगतां विघ्नावलीवारणो
नागेन्द्राश्रितविग्रहो गणपतिः पद्मासनाधिष्ठितः।
लीलालोललसत्सुवर्णकमलोत्तुङ्गप्रभाभास्वर-
श्चिन्ताभीष्टवरप्रदानविलसद्भक्तालिसंशोभितः॥

—उदयकाव्ये

26. कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमाला-
खेलल्लोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम्।
प्रत्नं वेतण्डरत्नं सततपरिचलत्कर्णतालप्ररोह-
द्वाताङ्कूराजिहीर्षादरविधृतफणाशृङ्गभूषाभुजङ्गम्॥

—चम्पूभारते अनन्तभट्टस्य

27. कासारतीरसरसीरुहमाददानः
शुभ्रं भ्रमद्भ्रमरमध्यमिवेन्दुबिम्बम्।
द्वैमातुरश्चिरतरं भवतस्स पायात्
सञ्जातनिर्मलजलप्रतिबद्धनर्मा॥

—प्रमाणमञ्जर्यां सर्वदेवस्य

28. कुम्भोपान्तात्पतद्भिर्मदजलनिवहैर्लब्धसेकातिरेका
प्रोन्मीलद्बालचन्द्राकृतिदशनमिषादङ्कुरं धारयन्ती।
आलोलत्कर्णतालप्रचलमधुकरा शीकरासारपुष्पा
विस्तीर्णा हस्तवल्ली दिशतु गणपतेः प्रार्थ्यमानं फलं वः॥

—सूक्तिमु० विश्वेश्वरस्य

29. कृपापांगवीक्षां समासाद्य यस्य
प्रमाथी प्रमथ्नाति दैत्यान्समस्तान्।

विधाता जगन्निर्मिमीते मुरारिः
प्रजापालयत्येन मीडेगणेशम् ॥

—ज्योतिषसौख्ये टोडरस्य

30. केशकेशवरुपैर्यस्सृजत्यवति हन्ति च।
तं गणेशमहं वन्दे स्मृतिमात्राघनाशनम् ॥

—वीरशैवसारोद्धारे

31. कैलाशे पूर्णराकाहिमकररुचिरे वीक्ष्य बिम्बं स्वकीयं
भूयो भूयोपि धावन्प्रतिभटकरटिस्पर्द्धया चण्डशुण्डः।
मा धावत्त्वं त्वदङ्घ्रिप्रहतिभिरभितो धूयतेऽसौ धरित्री
त्यम्बा वाग्भिर्निरुद्धाः कपटकरटिनः केलयो नः पुनन्तु ॥

—दैवज्ञानन्तसूनुरामदैवज्ञकृतमुहूर्त्तचिन्तामणेः
स्वोपज्ञटीकायां मिताक्षराख्यायाम्

32. क्षीरोदं पौर्णमासीशशधरणवयः प्रस्फुरन्निस्तरङ्गम्
चिद्व्योमस्फारनादं रुचिविसरलसद्बिन्दुवक्रोर्मिमालाम्।
आद्यं स्पन्दस्वरुपः प्रथयति सकृदोङ्कारशुण्डः क्रियादृग्
दन्त्यास्योऽयं हठाद्वश्शमयतु दुरितं शक्तिजन्मा गणेशः ॥

—चिद्गगनचन्द्रिकायां कालिदासस्य

33. खर्वं स्थूलतरं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दमदगन्धलुब्धमधुपव्यालोलगण्डस्थलम्।
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम्
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ॥

-नाशिकेतोपाख्याने

34. गजवदनं मनुजतनुं तुन्दिलमध्यं फणीश्वराभरणम्।
भाले लोचनवन्तं विधुमौलिं नौमि विघ्नेशम् ॥

— सुभा०सुधा०भा०

35. गजाननं गणाधिपं सुरासुरार्चितं सदा
समस्तभक्तकामदं शिवासुतं सुखप्रदम्।
वितण्डचण्डयोगिनी- समाजमध्यवर्त्तिनम्
प्रशस्तभूतिभूषितं नमामि विघ्नवारणम्॥

—सम्राट्–सिद्धान्ते जगन्नाथस्य

36. गणाधिपं सुरार्चितं समस्तकामदं नृणाम्।
प्रशस्तभूतिभूषितं स्मरामि विघ्नवारणम्॥

—रेखागणिते जगन्नाथस्य

37. गणानां बुद्धीशं सुरगणमुनीनां हितकरम्
मनीषासम्मानं धनबलसुविद्यासुखकरम्।
विधत्ते कल्याणं हरति जनविघ्नं विजयदम्
गणेशं तं वन्दे गमयति सदा यो निजपदम्॥

—सोमदेवकृतरसेन्द्रचूडामणेः व्याख्यायां
सिद्धिप्रदासमाख्यायां सिद्धिनन्दनस्य

38. गणेशाय नमस्तस्मै निर्विघ्नसिद्धिहेतवे।
आदिगौरीसमुद्भूततेजसोंशभवाय वै॥

—प्रासादमण्डने सूत्रधारमण्डनस्य

39. गणेशो नः पायात् प्रणमत गणेशं जगदिदम्
गणेशेन त्रातं नम इह गणेशाय महते।

गणेशानास्त्यन्यत् त्रिजगति गणेशस्य महिमा
गणेशे मच्चित्तं निवसतु गणेश! त्वमव माम्॥

—गणेशसहस्त्रनामव्याख्यायां खद्योताख्यायां भास्करभारत्याः

40. गणेशोऽयं लोकः स नमति गणेशं मतिकृते
गणेशेनोदीर्णः स्पृहयतु गणेशाय सततम्।
गणेशादुद्भूतः स किमिह गणेशस्य विकृति-
र्गणेशे चाध्यस्तः प्रकटय गणेशात्र यदृतम॥

—गणेशगीताव्याख्यायां नीलकण्ठस्य

41. गणेशं लोकेशं परमपरमं पालनपरम्
समस्त-व्यस्तानां सुखनिलयतत्त्वैकवचसाम्।
हरिब्रह्मेशानाः सफलकृतयो यत्करूणया
नमस्यामो देवं गिरिशगिरिजानन्दनकरम्॥

—आनन्दपूर्णमुनीन्द्रकृतन्यायचन्द्रिकायाःव्याख्यायां
न्यायप्रकाशिकासमाख्यायां स्वरूपानन्दमुनीन्द्रस्य

42. गणेशं वन्देऽहं मदजलगलन्निर्झरसरित्-
परामोदास्वादप्रसृतमनसां क्रीडनवताम्।
द्विरेफद्वन्द्वानां कलसरसहुङ्कारसुरस-
स्वरप्रायैर्गेयः श्रवणपुटपेयैः प्रमुदितम्॥

—चतुर्वर्गचिन्तामणौ हेमाद्रिसूरेः

43. गण्डकण्डूयनोत्खातमेरुमूलान्तशायिनम्।
पायाद् गणेशितुः शेषं विसमित्यामृशन् करः॥

—सूक्तिमुक्तावल्यां हरिहरस्य

44. गण्डस्थलीगलद्मन्दमदप्रवाह-
माद्यद्द्विरेफमधुरस्वरदत्तकर्णः।

गणेशः

हर्षादिवालसनिमीलितनेत्रयुग्मो
विघ्नच्छिदे भवतु भूतपतिर्गणेशः ॥

—प्रश्नचण्डेश्वरे दैवज्ञरामकृष्णस्य

45. गलदविरलमदजलालिकुलकोलाहलव्यसनी।
जठरपिठरभरमन्थरसञ्चारः पातु विघ्नेशः ॥

—रघुवंशस्य व्याख्यायां रघुदीपिकासमाख्यायां कृष्णभट्टस्य

46. गुणगणपरिवारं चारुकेयूरहारम्
गिरिवरधरसारं योगिनीचक्रचारम्।
भवजलनिधिपारं दुःखदारिद्र्यहारम्
गणपतिमभिवन्दे वक्रतुण्डावतारम् ॥

—मुहूर्तसारसङ्ग्रहे लालमणेः

47. गौरीकुचानुबिम्बितमात्मीयविषाणमुपवर्ण्य।
कर्षन्बालमृणालभ्रान्त्या द्वैमातुरः पातु ॥

—आर्यासप्तशत्यां विश्वेश्वरपण्डितस्य

48. गौरीगिरीशयोरेकमङ्कालङ्कारकारणम्।
मदवारिझरोद्गारमयं वस्तु वयं स्तुमः ॥

—सूक्तिमुक्तावल्यां हरिहरस्य

49. चञ्चच्चन्द्रमरीचिभिश्चकचकच्चूडं चलल्लोचना-
चारुस्मेरकुचोपभोगघुसृणव्यालिप्तवक्षःस्थलम्।
बिभ्राणं धनुरैक्षवं सृणिगुणो पौष्पं शरं चोदय-
त्सूर्यांशुप्रकरद्युतिं गणपतिं वन्दे जगन्मोहनम ॥

—ताराशशाङ्के नारायणात्मजकृष्णकवेः

50. चन्द्रविभूषितभालं गौरीबालं गलेऽच्छमणिमालम्।
विघ्नविघातायालं स्मरामि हतदेवरिपुजालम् ॥

—अलङ्कारमञ्जूषायां देवशङ्करभट्टस्य

51. चलत्कर्णाग्रविक्षिप्तगण्डोड्डीनालिमण्डलम्।
धुन्वानं विघ्नसङ्घातमिव विघ्नान्तकं नुमः॥

—कथासरित्सागरे सप्तदशलम्बके सोमदेवभट्टस्य

52. जगज्जलधितारकः कृतिकुले मुदां धारकः
पराभवविदारकः सुकृतिरीतिसञ्चारकः।
द्विषद्वनकुठारकस्सकलखेदसंहारकः
सदैव सुखकारकः स्फुरतु शूलिनो दारकः॥

—श्रृङ्गारसारिण्यां चित्तधरस्य

53. जयजयामरपञ्चकमञ्चगे हरहराधिगतं दुरितं द्रुतम्।
भरभरोदयभास्करजातकं भवभवालमतोऽमलकीर्त्तये॥

—उदयभास्करे रूद्रमणिकवेः

54. जयति गिरितनूजाप्राणपीयूषधारा
हरहृदयपयोधिस्फूर्जदिन्दूदयश्रीः।
त्रिभुवनमहनीयब्रह्मभिर्ध्येयमूर्त्तिः
सुरनरमुनिवृन्दैस्तूयमानो गणेशः॥

—लीलावतीगणितस्य टीकायां सुवर्णकाख्यायां
भीमदेवात्मजमोषदेवस्य

55. जयति चरणपद्मं श्रीमदाखुध्वजस्य
प्रणतसुरसमूहोतुङ्गमौलिं प्रवच्यात्।
गलितमणिकलायत्सङ्गमासाद्यशक्त्या
स्मृतिसृतिगतहेतुं लज्जयन्ते मणीशम॥

—तिथिचन्द्रिकायां पक्षधरस्य

56. जयति जगति जनताजयहेतुः
सकलदुरितचयवारिधिसेतुः।
गणपतिरचलसुतासुखसिन्धुः
प्रणतमनुजमुनिदैवतबन्धुः॥

—बृहद्योगतरङ्गिण्यां त्रिमल्लभट्टस्य

57. जयति मदमुदितमधुकरमधुररुताकलनक्वणितापाङ्गः।
करविहितगण्डूकण्डूविनोदसुखितो गणाधिपतिः॥

—प्राकृतप्रकाशे वररुचेः

58. जयतिविदितसारः सृष्टिविश्वोपकारः
प्रबलगदकुठारः संहिताकण्ठहारः।
सकलगुणसमाजः सिद्धिविद्यानिकुञ्ज-
स्त्रिपुरहरतनूजस्तेजसः स्फारपुञ्जः॥

—रसरत्नदीपे लक्ष्मीधरपण्डितात्मजधनेश्वरस्य

59. जेयाजेयाञ्जयति दितिजान्यत्प्रसादेन
विष्णुर्जिष्णुर्लोकानवति सकलान्यत्पदार्चाप्रसादात्।
सृष्टिं स्रष्टा हरति च हरः प्रान्तकाले च साम्बो
विघ्नेशो वो हरतु दुरितं मे सुसिद्धिं विधत्ताम्॥

—रमलप्रश्ने

60. तरणिशतसवर्णं कर्णघूर्णद्द्विरेफ-
वलिवलितकपोलोद्दामदानाभिरामम्।
गिरिश-गिरिसुताभ्यां लालितं नित्यमङ्के
स्वजनभरणशीलं शीलये विघ्नराजम्॥

—वेदान्तसिद्धान्तसूक्तिमञ्जर्यां गङ्गाधरेन्द्रसरस्वत्याः

61. तुन्दिलमिन्दुकलाधरमधरीकृतविघ्नसङ्घातम्।
ढुण्ढिं ढौकितकामं कामरिपोरर्भकं भजत॥

—वर्षफलपद्धतेष्टीकायां उदाहरणसमाख्यायां दैवज्ञकेशवस्य

62. तुहिनशिखरिकन्याहृत्सरोजांशुमाली-
पदनमदमृतान्धः कार्यसिद्ध्येकहेतुः।
नतिभविकसुविद्यासिद्धिलक्ष्मीप्रदाता
स जयति गणनाथो विघ्नवल्लीकुठारः॥

—रामचन्द्रभट्टकृतसभ्याभरणस्य टीकायां
रश्मिमालासमाख्यायां गोविन्दभट्टस्य

63. दातुं चतुर्वर्गमसौ चतुर्दो-
स्स्वासाम्यमाख्यातुमिवैकदन्तः।
विघ्नान्धकारोष्णमयूखमाली
तन्याच्छिवं नः स गणाधिशाली॥

—धर्मप्रदीपे भैरवदत्तपण्डितस्य

64. दिङ्मातङ्गसुतुङ्गपञ्चवदनं विश्वैकलम्बोदरम्
चूडारत्नसहस्रभूधरमहाहारं सुनीलाम्बरम्।
स्वान्तध्वान्तहरं कलानिधिधरं कोटीररुक्सुन्दरम्
वाराहोपमवाहनं गणपतिं वन्दे परं शङ्करम्॥

—सिद्धान्तसुन्दरे नागनाथात्मजज्ञानराजस्य

65. देवस्येशानसूनोः सुरगणमुकुटज्योतिरुद्योतिताङ्घ्रेः
शुण्डादण्डः करोतु क्वचिदपि विकसन् श्यामलो मङ्गलं वः।
दन्तो यस्यैकदेशे विकसितविपुलस्फाटिकस्तम्भकान्तिः
प्राप्तब्राह्माण्डकोटौ हरिचरणा इव व्योमगङ्गाप्रवाहः॥

—प्रवरदीपिकायाम्

66. देवं नमामि गिरिजात्मजमेकदन्तम्
सिन्दूरचर्चितवपुः सुविशालमुण्डम्।
नागेन मण्डिततनुं युतसिद्धिबुद्धिम्
सेव्यं सुरोरगनरैः सकलार्थ सिद्ध्यै॥

—वास्तुशास्त्रराजवल्लभे सूत्रधारमण्डनस्य

67. द्वे भार्ये सिद्धिबुद्धी तदनुसहचरी ऋद्धिबुद्धी गुणाद्यौ
द्वौ पुत्रौ लक्षलाभौ सकलगुणमयौ मण्डपे कल्पवृक्षः।
गेहे यस्य प्रसूतं सदयनममृतं मोदकं खण्डमिश्रं
भूयाद्भूत्यै गणेशो जगदखिलयशानन्दकारी कुटुम्बः॥

—रूद्रयामलरसार्णवकल्पे

68. धान्यं धनं निवसनं श्वसनं निजानाम्
दैन्यं विनैव भुवि जीवनमर्पयन्तम्।
नान्यं कदापि गणयामि पुरद्विषोऽपि
मान्यं महागणपतिं मनसा स्मरामि॥

—बोधायनगृह्याधानविधानपद्धतौ

69. ध्यायेत्सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे
त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम्।
द्वापरे तु गजाननं युगभुजं रक्ताम्बरागं विभुम्
तुर्ये तु द्विभुजं सिताङ्गरुचिरं सर्वार्थदं सर्वदा॥

—दानसिन्धौ

70. ध्यायेद्देवमुमासुतं निजपदद्वन्द्वैकभक्तेष्टदम्
सिन्दूरारुणकुम्भयुग्मविलसच्चन्द्रार्द्धयुक्छेखरम्।
गण्डद्वन्द्वगलद्द्रवन्मदमिलन्मौलीन्दुभृङ्गान् शनैः
कर्णाभ्यां विनिवारयन्तमनिशं प्रत्यूहविच्छित्तये॥

—सपर्याकल्पवल्यां श्रीनिवासस्य

71. नमस्तस्मै गणेशाय ज्ञानविज्ञानदायिने।
यस्यानलायते नाम विघ्नारण्यविदाहने॥

—संस्काररत्नमालायाम्

72. नमस्तस्मै गणेशाय नरकुञ्जररुपिणे।
यश्चागस्त्यायते नित्यं विघ्नसागरशोषणे॥

—भट्टोजिदीक्षितकृत— प्रौढमनोरमायाष्टीकायाम्
शब्दरत्नमनोरमा— समाख्यायां हरिदीक्षितस्य

73. नमस्तस्मै गणेशाय यतकण्ठः पुष्करायते।
मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे॥

—दशरूपके धनञ्जयस्य

74. नमामि विघ्नहर्तारमुमासुतमभीष्टदम्।
प्रपन्नार्तिहरं विघ्नतिमिरौघदिवाकरम्॥

—श्रीशङ्कराचार्यचम्पूकाव्ये बालगोदावर्याः

75. नमो गणाधिपतये सर्गस्थित्यन्तकारिणे।
अज्ञानतिमिरारातिबालशीतांशुधारिणे॥

—हरिहरोपाध्यायकृतभर्त्तृहरिनिर्वेदनाटकस्य
व्याख्यायां सुबोधिनीसमाख्यायां मुकुन्दशर्मणः

76. नमो नालयते शुण्डां विषाणेन मृणालिने।
प्रत्यक्कमलकन्दाय कर्णाभ्यां पर्णशालिने॥

—महार्थमञ्जर्याः सोपज्ञटीकायां परिमलसमाख्यायां
महेश्वरानन्दस्य

77. नमः प्रचण्डवेतण्डतुण्डाय मृडसूनवे।
प्रत्यूहतिमिरध्वंससमुद्यत्करभानवे॥

—भोजनकुतूहले रघुनाथस्य

78. निजेष्टसम्प्रदानकल्पकल्पभूरूहाकृतिम्
दुरन्तविघ्नवारिदप्रभञ्जनं निरञ्जनम्।
मदीयचित्तसारसप्रबोधभास्करं परम्
रसालमूलवासिनं भजामि विघ्ननाशकम्॥

— षट्पदीमञ्जर्यां शङ्करानन्दतीर्थस्य

79. निर्विघ्नविश्वनिर्माणसिद्धये यदनुग्रहम्।
मन्ये स वव्रे धातापि तस्मै विघ्नजिते नमः॥

—कथासरित्सागरे तृतीये लम्बके सोमदेवभट्टस्य

80. निशासु ताण्डवोद्दण्डशुण्डासीत्कारशीकरैः।
ज्योतींषि पुष्णन्निव वस्तमो पुष्णातु विघ्नजित्।।

—तत्रैव पञ्चदशलम्बके

81. निशि विघ्नजितो वोऽव्यात्ताण्डवोद्दण्डितः करः।
शोणश्चन्द्रातपपत्रस्य तन्वन्विद्रुमदण्डताम् ॥

—तत्रैव चतुर्दशलम्बके

82. नृत्यन्तं रजनीमुखे स्वपितरं स्तुत्यं त्रिलोकीजनै-
र्नित्यं तन्निजकर्णतालपवनैरत्यन्तमानन्दयन्।
आघ्नानश्च यथालयं भुवि कराग्रेणोरुनादं कृपा-
निघ्नात्मा स हि विघ्नराज इह मे विघ्नान् विजेघ्नीयताम् ॥

—पूर्वभारतचम्प्वां मानवेदस्य

83. नृत्यावताररभसोच्छलदच्छदान-
पानप्रमत्तमधुपव्रजगुञ्जितेन।
यो विघ्नवृन्दमुरुतर्जयतीव देवो
द्वैमातुरः स भवतां हितमातनोतु ॥

—कोन्याभिलेखे कलचुरिपृथ्वीदेवद्वितीयस्य

84. पातु वस्ताण्डवोड्डीनगण्डसिन्दूरमण्डनः।
वान्ताभिपीतप्रत्यूहप्रताप इव विघ्नजित् ॥

—कथासरित्सागरे षोडशलम्बके सोमदेवभट्टस्य

85. पितुः स्कन्धे स्थित्वा विमलमुकुरालोकनधिया
हिमांशुं व्याकर्षन्नहिभयविदूनेन मनसा।
विधुं हित्वा वह्निं सरसमणिबुद्ध्या गिरिभुवा
शुभं भीतोनीतो दिशतु बहु वः शंभुतनयः॥

—गङ्गालहर्य्याष्टीकायां पीयूषलहरीसमाख्यायां सवाशिवस्य

86. पीताम्बरोऽथ बलजिन्नागक्षयबहलरागगरुडचरः।
स जयति हरिरिव हरजो विदलितभवदैन्यदुःखभरः॥

—रसहृदये मङ्गलविष्णुसुतगोविन्दभगवत्पादस्य

87. पुरारातिसूनुर्मुरारातिमुख्या
सुरारातिपूज्यः कुमारानुजातः।
समाराधकान्सम्पदापूरयन्तः
स पायादपायादुमायास्तनूजः॥

—भानुदत्तकृतरसतरङ्गिण्याष्टीकायां
तरङ्गिणीसमाख्यायां राजारामस्य

88. पुष्पेण स्वार्जितेन स्वमतफलवपुः स्वार्च्यमानः किलासी-
द्विष्णुर्नः शङ्करोऽसौ विधिरजनि निजं वेदमावेदयिष्यन्।
इत्थं निर्णीतमार्यैः प्रणतिषु पटुना मौलिना वीतसंख्यान्
वारानाराधयामो दिनमनुभगवद्विघ्नराजप्रभावम्॥

—पद्मपादाचार्यकृतपञ्चपादिकायाष्टीकायां
प्रबोधपरिशोधिनीसमाख्यायां आत्मस्वरूपस्य

89. पूजितं विघ्नभेदेन शिवेनापि पुरद्विषा।
सर्वसम्पत्करं देवं नमामि गणनायकम्॥

—पर्यायपदावल्यां वासुदेवस्य

90. प्रचण्डकरदण्डाग्रविघ्नखण्डनपण्डितम्।
अलिपिण्डलसद्गण्डं वक्रतुण्डमुपास्महे॥

—तत्त्वमुक्तावल्यां नन्दपण्डितस्य

91. प्रत्यूहध्वान्तमार्त्तण्डं पिण्डं प्रेम्णो महेशितुः।
वक्रतुण्डमुमापुण्यम्वराभीतिकरं श्रये।।

—वेदान्तसिद्धान्तमतमार्तण्डे देवदत्तशर्मणः

92. प्रवालाद्रिप्रस्थद्युतिनिचयपर्यायवपुषे
नमो विघ्नश्रेणीविघटनपटिम्नाय महसे।
जगत्प्रादुर्भावस्थितिलयनिरायासरचना
विनोदासक्ताय प्रणतफलसिद्धिप्रतिशुचे।।

—बालग्रहहरे

93. प्रविकासिताब्जषण्डः प्रत्यूहध्वान्तखण्डने चण्डः।
भुवनाभयकरदण्डः स जयति विघ्नेशमार्तण्डः।।

—गङ्गावरतरणचम्प्वां शङ्करदीक्षितस्य बालकृष्णसूनोः

94. प्रस्फुरन्मधुपचुम्बितपद्मा पङ्कजातजनिपङ्कजिनीयम्।
बुध्यते किल जडापि च यस्मात् सारुणं तदिहधाम नमाम।

—वृत्तरत्नाकरस्य टीकायां सेतुसमाख्यायां भास्करशर्मणः

95. प्रावृषेण्यनवाम्भोदगर्जितौर्जित्यजिन्ति वः।
वैनायकानि निघ्नन्तु निर्विघ्नं वृङ्हितान्यघम्।।

—रानोडस्थप्रस्तराभिलेखे

96. प्रियोपविष्टवामोरुं दशबाहुं किरीटिनम्।
महागणपतिं वन्दे सर्वकार्यार्थसिद्धये।।

—साहित्यकल्पद्रुमे सोमशेखरस्य

97. बालसूर्यप्रतीकाशं वन्दे देवं गणाधिपम्।
करस्थकदलीचूतपनसेक्षुकमोदकम्।।

—कालिकाखण्डे

98. ब्रह्मेन्द्राद्यमरार्चितोऽब्धिनिभतद्विघ्नान् जरीहर्ति यो
यत्पादाभिजितं सरोजपटलं भूत्वा तदाऽधोमुखम्।
स्पृष्टं मित्रकरैरथोन्मुखमभूत्सिंहायते मारणे
यः स्वध्यानपरान्तरायकरिणां तं विघ्नराजं भजे।।

—रामकथासारे सुब्बय्यशास्त्रिणः

99. भक्तेष्टाभयदानाय समुद्यतकरद्वयम्।
ऋद्धिसिद्धिद्वयोपेतं वन्दे श्रीगणनायकम्।।

—कुण्डकल्पलतायां दुण्ढिराजसूनुपुरुषोत्तमस्य

100. भजामि भवनन्दनं नतमनोऽम्बुजेन्दिन्दिरम्
गजाननमहर्निशं बहुलविघ्नविच्छित्तये।
शशाङ्कशकलोज्ज्वलन्मुकुटबन्धुरं सुन्दरम्
सुरासुरजनैर्नुतं निखिलमौनिवृन्दैर्नतम्।।

—प्रवरनिर्णये यज्ञनारायणस्य

101. भालस्थानलसत्सुधाकरसुधापानप्रसङ्गोल्लसन्
मोदप्रोज्झितदानपानरचनाकेलिं मिलिन्दावलीम्।
सिन्दूरारुणकुण्डलीकृतवलत् शुण्डाग्रभागोत्पतत्-
फूत्कारैस्तिरयन् विनाशयतु वो विघ्नान् स विघ्नाधिपः।।

—कस्यचिदज्ञातनाम्नो नाटकस्य प्रस्तावनाभागे शङ्करदीक्षितस्य

102. भाले यस्य कलानिधिर्मधुमिलद्भृङ्गावली गण्डयोः
कण्ठेहिर्विलसत्यलं पदयुगे गीर्वाणचेतोगुणाः।
ब्रह्मापि त्रिजगत्सिसृक्षुरभवन्निर्विघ्नसंसिद्धये
श्रीमन्मङ्गलमूर्त्तिमाद्यममलं तं नौमि भक्तप्रियम्।।

—सिद्धान्तसुन्दरे ज्ञानराजस्य

103. भृङ्गकुलपीतमदभङ्गगजतुङ्गम्
मङ्गलकृतां हृदयरङ्गविनिविष्टम्।
अङ्गजरिपोः प्रथममङ्गजमविघ्नम्
तं गणपतिं गुणनिधिं शरणमेमि।।

—परिभाषावृत्तिकारिकायाम्

104. मदवारिलसद्भृङ्गं मणिकुण्डलशोभितम्।
गिरिजातनुजं वन्दे गिरिजातमनोरथम्।।

—तन्त्रसिद्धान्तसङ्ग्रहे गरुडध्वजस्य

105. मन्दान्दोलितकण्ठतालविलसद्व्यालोलभृङ्गावली-
झङ्कारश्रवणाय दत्तहृदयं श्रीशैलजानन्दनम्।

प्रत्यूहान्धतमस्सहस्रकिरणं सेव्यं दयासागरम्
वन्दे वारिधिजापुरीसुनिलयं वातापि विघ्नेश्वरम्।।
—सिद्धान्तसारावल्याम्

106. माद्यद्गण्डस्थलान्तः प्रभवमदझरीमज्जदुन्मज्जदुच्चै-
र्गायत्स्फायत्प्रमोदभ्रमरवरवधूल्लासमुत्पादयन्तः।
केऽप्येते स्पर्शमात्राद्विदलितदुरिताः कर्णतालीयवाता
विघ्नाधीशस्य सन्तु प्रसृतपरिमला भूयसे श्रेयसे वः।।
—कमलाकण्ठीरवे नारायणस्य

107. यच्चिन्तनं विश्वजनीनमुच्यते
हित्वान्तरायं विनयेत्सतीं मतिम्।
यो विघ्नतामिस्ररविस्वरुपको
द्वैमातुरं तं सततं नमामि।।
—विन्ध्यमाहात्म्ये

108. यत्पादपङ्कजरजः परिमार्जितेषु
चेतस्सुदर्पणतलामलतां गतेषु।
शब्दार्थसम्पद उदारतराः स्फुरन्ति
विघ्नच्छिदेऽस्तु भगवान्स गणाधिनाथः।।
—शृङ्गारप्रकाशे श्रीभोजदेवस्य

109. यत्पादपद्मं सुरसिद्धदैत्याभीष्टसिद्धयै प्रणमन्ति नित्यम्।
तं विघ्नराजं मनसा स्मरामि भक्तप्रियं नागमुखं गणेशम्।।
—वर्षतन्त्रस्य टीकायां दिवाकरसूनुविश्वनाथस्य

110. यत्सद्बोधसुखैकरूपमखिलं विश्वात्मना भासते
सृष्टिस्थे मलयैर्विरञ्चिमुरभिद्रुद्रादिसंज्ञान्वितम्।
प्रत्यग्रूपतया च यद्व्यवसितं वेदान्तवाक्यैर्मह-
ज्ज्योतिस्तत्समुपास्महे गणपतिं देव्या समालिङ्गितम्।।
—सिद्धान्तसिद्धाञ्जनस्य व्याख्यायां रत्नतूलिकाख्यायां
भास्करदीक्षितस्य

111. यद्गण्डमण्डलगलन्मदवारिबिन्दु-
पानालसातिनिभृता ललितालिमाला।
सद्गुञ्जितेन विनिहन्ति नवेन्द्रनील
शङ्कां स वो गणपतिः शिवमातनोतु।।

–रसमञ्जर्यां वैद्यनाथसूनुशालिनाथस्य

112. यन्नादरादमरदानवयूथपानां
क्षीराम्बुधावमृतसाधनमन्थनाद्रिम्।
मग्नं निरीक्ष्य हरिणा सह तैर्जयाय
सम्पूर्णतो जयति विघ्नविघातदक्षः।।

–भागवतस्य टीकायां भावार्थदीपिकाख्यायां श्रीधरस्य

113. यन्नामस्मरणाद्यान्ति विलयं विघ्नसञ्चयाः।
तं नमस्ये गणाधीशं भजद्भ्यो बुद्धिदायकम्।।

–टोडरानन्दज्योतिषे वास्तुसौख्यप्रकरणे

114. यशोभिर्बलक्षी कृतक्ष्मो विपक्षी
भवद्दैत्यपक्षीयभक्षी गणेशः।
सदक्षीभवन्भक्तरक्षी स्वमूर्त्तिः
सपक्षी भवन्मे समक्षी करोतु।।

–अमरकाव्ये रणछोड़भट्टस्य

115. यस्माद्विश्वस्य सृष्टिस्थितिलयविधयो यत्प्रसादकार्षी-
दीशः प्लोषं पुराणं निखिलतनुभृतां यच्च कर्मैकसाक्षी।
लीलामातङ्गवेषं समजनि शिवयोः पुत्रभावेन यत्तत्
प्रत्यूहव्यूहविध्वंसनपटु जगतां बीजमव्यान्महो वः।।

–लीलावत्यां भास्कराचार्यस्य

116. यस्य भृङ्गावलिः कण्ठे स्रुतदानाम्बुपूरिते।
भाति रुद्राक्षमालेव स वः पायाद् गणाधिपः।।

–कात्यायनकृतप्रातिशाख्यस्य टीकायां ज्योत्स्नाख्यायां रामचन्द्रस्य

117. यस्याङ्घ्रिद्वयपूजनेन निखिलाः सिद्धीर्लभन्ते नराः
वृद्धीः प्राप्य वसन्ति वेश्मसु परास्तेषां समाः सम्पदः।
भक्तस्वान्तनितान्तमोहदलने दक्षं विपक्षं वरम्
विघ्नानां प्रणमाम्यनारतमहं तं श्रीगणाधीश्वरम्।।

—सिंहसिद्धान्तसिन्धौ शिवानन्दभट्टस्य

118. यस्यैकः कर आनताभयकरो नो जातु विश्राम्यति।
प्रीत्यै सोऽस्तु समस्तवस्तुभरणन्यस्ताशयो विघ्नराट्।।

—वीरतरङ्गिण्यां चित्रधरस्य

119. योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशय-
प्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम्।
आनन्दप्लवमानबोधमधुरामोदच्छटामेदुरम्
तं भूमानमुपास्महे परिणतं दन्तावलास्यात्मना।।

—महागणपतिस्तोत्रे राघवचैतन्यस्य

120. यो दक्षिणो दक्षिणपाणिपुष्प-
प्रदानतो वाञ्छितमर्थजातम्।
संसूच्यसिद्धं कृतवानशेषम्
तं विघ्नराजं प्रणतोऽस्मि नित्यम्।।

—दुष्टदमनकाव्ये कृष्णभट्टस्य

121. यो देवैरभिजातिविश्वविजये सिद्धैस्तपः सिद्धये
निष्प्रत्यूहमभीप्सितार्थनिचये मर्त्यैरमर्त्याश्रितैः।
विद्यावादिविनोदिभिश्च समये संस्मर्यते श्रूयते
ग्रन्थारम्भमहे महेशजनुषे तस्मै नमस्कुर्महे।।

—देवीभगवतीमाहात्म्ये

122. यो देवः प्रथमो विधीशहरिमुख्यानां पुरो नाकिनाम्
यः शुण्डापरिशोभिलम्बिजठरो यो नारिकेलप्रियः।
मूलाधारचतुर्दलाब्जविलसच्छ्रीवल्लभानायको
विघ्नान् नो विधुनोतु मोदककृतानन्दः स विघ्नेश्वरः।।

—दशश्लोकीस्तवराजे

123. योनादृतो विधिमुखैर्विबुधैर्गणेशो
वाक्शायतः समभवन्सकलाजलौघाः।
सर्वं समञ्जसभवन्नमनस्ततोस्य
सोऽयं प्रभुर्जयति विघ्नविघातदक्षः।।

—भागवतस्य टीकायां भावार्थदीपिकासमाख्यायां श्रीधरस्य

124. यो वन्द्यस्त्रिदशैः सदैव यमिनां मध्ये सदा योगिनां
यो विघ्नौघविनाशनेप्यतिदृढो भाग्यप्रदः सेविनाम्।
यो विश्वार्त्तिहरस्तथैव सुखदः साहित्यविद्यानिधि-
तमंवन्दे गिरिजात्मजं गणपतिं वाक्सिद्धये सर्वदा।।

—प्रयोगदर्पणे नारायणसूनुगोपालसूनुपद्मनाभदीक्षितस्य

125. यो वर्गांश्चतुरः समस्तजगतां हस्तैश्चतुर्भिर्निजै-
र्नित्यं यच्छति यश्च कर्मणि शुभे प्राक् पूज्यते सज्जनैः।
तं वन्देऽखिललेखशेखरशिखारत्नावलिच्छायया
नित्यं रञ्जितपादमेकदशनं प्रत्यूहनाशेच्छया।।

—रामविलासकाव्ये विश्वनाथकवेः

126. यो विघ्नभित्यै जगतां च गुप्तये
स्वः सप्तभिर्वामनुजैश्चपूजितः।
यो विघ्नतूलैककृशानुरूपकस्
तं ढुण्ढिराजं शरणं गतोऽस्मि।।

—विन्ध्यमाहात्म्ये

127. यो विघ्नव्रजसंहरः सुरवरो लम्बोदरः सुन्दरः
सर्वज्ञः सुरपूजितः सुरनृणां सिद्धिप्रदः सर्वदः।
शर्वाणीप्रियनन्दनो मुरहारभेदः सदादुःखहः
सोऽस्मिन्वाञ्छितपूरणे विनशनं विघ्नस्य कुर्यान्मम।।

—आरव्ययामिन्याम्

128. यं ब्रह्मवेदान्तविदो वदन्ति
परं प्रधानं पुरुषं तथान्ये।
विश्वोद्गतेः कारणमीश्वरं वा
तस्मै नमो विघ्नविनाशनाय।।

—जयपुरनगराभिलेखे

129. यः क्षान्तिमानप्यकरुणः प्रकोपे
शान्तोपि दीप्तः स्मरनिग्रहाय।
निमीलिताक्षोऽपि समग्रदर्शी
स वः शिवायास्तु शिवातनूजः।।

—अर्बुदपर्वतस्थनेमिनाथमन्दिराभिलेखे

130. यः सिन्धौ फेनराशिर्भुवि कुमुदवनं व्योम्नि नक्षत्रलक्ष्मी-
रब्धौ मुक्तासमूहस्तरुषु सुमनसो मानसे हंससङ्घः।
श्रीकण्ठे भूतिलेशः शिखरिषु मणयो दिक्षु नीहारपानम्
पाण्डुः शुण्डाग्रजन्मा जयति गणपतेः शीकराणां विलासः।।

—सुभा० सुधा० भा०

131 यां प्रेम्णा शशिमौलिना गजमुखो गाढं समालिङ्गित-
श्चापल्याच्छशिनः कलां करतलेनादाय मूर्ध्निस्थिताम्।
निक्षिप्येतरदन्तसीम्नि समभात्संलक्ष्य दन्तद्वयः
कल्याणं वितनोतु सा शशिकला विघ्नेश्वरः सोऽपि वः।।

—विलासवानपत्राभिलेखे प्रोलयनायकस्य

132. रक्ताम्बराय फणिराजविभूषणाय
प्रोद्भूतभस्मकणकीर्णसुमोत्कराय।
सङ्गीयमानयशसे मदपानलुब्धै-
र्भृङ्गैः सुरैरिव नमोऽस्तु गणाधिपाय।।

—सुभा०सुधा०भा०

133. रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरुढं त्रिनेत्रम्
पाशं चैवाङ्कुशं वै रदनमभयदं बाहुभिर्धारयन्तम्।
शक्त्या युक्तं गजास्यं पृथुतरजठरं नागयज्ञोपवीतम्
देवं चन्द्रार्द्धचूडं सकलभयहरं विघ्नराजं नमामि।।

—गणेशमानसपूजास्तोत्रे

134. लक्ष्मीं तनोतु सुतरामितरानपेक्ष-
मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम्।
यद्विश्वविघ्नहनने प्रथितानुबन्धि-
त्वेनानुतत्त्वमुदिताभ्युदयं चकास्ति।।

—सुभा०सुधा०भा०

135. लक्ष्मीं हस्ते दिशन्ति प्रमदमुपहरंत्यब्धिवेलादुकूला-
मुर्वीं निर्वेशयन्ति प्रतिदिशमचलां कीर्त्तिमानर्त्तयन्ति।
किञ्चान्यद्यद्यदिष्टं निदधति निखिलं तत्तदग्रे समग्रं
नित्यं निर्वर्त्यमानाः कुशलकुलगृहं विघ्नराजप्रणामाः।।

—गर्वपाडुदानपत्राभिलेखे गणपतिदेवस्य

136. लभ्यते सर्वकार्येषु पूजया गणनायकः।
विघ्नं निघ्नन् स वः पायादपायाद् गणनायकः।।

—भनुपुर—अभिलेखे द्दित्तराजदेवस्य

137. लम्बोदरं महाभीमं गजवक्त्रं गणाधिपम्।
एकदन्तं विशालाक्षं तं वन्दे गिरिजासुतम्।।

—प्रश्नविनोदे

138. लम्बोदरं विघ्नविनाशनं च नत्वा भवानीतनयं गजास्यम्।
यस्य प्रसादेन सुराः समस्तास्तिष्ठन्ति स्वे-स्वे च पदे सदैव।।

—रमलनवरत्ने परमसुखोपाध्यायस्य

139. लीलागलितकल्लोलकालव्यालविलासिने।
गणेशाय नमो नीलममलामलकान्तये।।

—लघुचाणक्ये

140. लुब्धाकपोलमधुवारिमधुव्रताली
कुम्भस्थलीमधुविभूषणलोहिताङ्गी।
माणिक्यमौलिरिवराजति यस्य मौलौ
विघ्नं स धूनयतु विघ्नपतिः सदा वः ।।

—मदनविनोदनिघण्टौ मदनपालस्य

141. वदनवारणं वन्दे प्रत्यूहव्यूहवारणम्।
दारणं दुरिताद्रीणां जगतामादिकारणम्।।

—नेल्लोर—ताम्रपत्राभिलेखे रामचन्द्रस्य

142. वन्दामहे सकलदैवतपूर्वपूज्यं प्रत्यूहपर्वतविदारणवज्रदन्तम्।
कात्यायनीनयननन्दनमिन्दुचूडं गण्डस्थलीगलदमन्दमदं गणेशम्।।

—त्रिविक्रमभट्टकृतनलचम्प्वाः व्याख्यायां
भावबोधिनीसमाख्यायां नन्दकिशोरशर्मणः

143. वन्दे तं गणनाथमर्थमनघं दारिद्र्यदावानलम्
शुण्डादण्डविधूयमानसमलं संसारसिन्धोस्तरिम्।
यं नत्वा सुरकोटयः प्रभुवरं सिद्धिं लभन्ते पराम्
सिन्दूरारुणविग्रहं परिचयाद्दानाम्बुधारावृतम्।।

—प्रस्तावरत्नाकरे हरिदासस्य

144. वन्दे तं गणनायकं गुणनिधिं गण्यं विभूनां पुरो
रम्यं भक्तजनस्य विघ्नपटलं दुर्नीयसम्पद्विधौ।
यस्याराधनमन्तरेण जगतां कश्चिन्न सिद्धिं गतो
यं चाराध्य चिराय विन्दति परां क्षुद्रोऽपि मालां श्रियाम्।।

—सुभा०सुधा०भा०

145. वन्देऽनङ्गारिसुतं गण्डगलद्दानसङ्गिभृङ्गरवम्।
नागास्यं गणनाथं सुरराजमुखामरैर्नमितम्।।
—अभिधानमञ्जर्यां भिषगार्यस्य

146. वन्दे महागणपतिं मदनारिसूनुम्
वामोरुसुस्थवनिताभुजवेष्टिताङ्गम्।
वल्लीशपूर्वजमभीष्टदमाश्रितानाम्
वाणीपतिप्रमुखदेवगणार्चिताङ्घ्रिम्।।
—क्रियाक्रमद्योतिकाव्याख्यायाम्

147. वन्दे मोदकपाणिं मोदकरं मोदकप्रियं देवम्।
ईशेश्वरीकुमारं लेखशिरोमुकुटरत्नशोभिपदम्।।
—कुण्डरत्नावल्यां कृष्णदीक्षितसूनुरामचन्द्रदीक्षितस्य

148. वन्दे वरप्रदमहं वरवारणेन्द्रवक्त्रम्
सदा क्षितिभृदीश्वरजातनूजम्।
विघ्नेश्वरं विबुधवन्दितपादपद्मं
संसारसम्भवभयापहमानतानाम्।।
—शङ्कराचार्यस्य—उपदेशसाहस्राष्टीकायां बोधनिधेः

149. वन्दे श्रीगणनायकाङ्घ्रिकमलं लोके सदा वन्दितम्
भक्तस्वान्तसरोवरेषु सततं संलग्नमानन्ददम्।
हैमाभूषणकेसरं सुललितं सौन्दर्यगन्धान्वितम्
नित्यं निर्जरषट्पदैश्च कमलं पेपीयमानम्मुहुः।।
—भुवनेशलौकिकन्यायसाहस्त्र्यां ठाकुरदत्तशर्मणः

150. वन्दे सिन्दूरपूराभं पार्वतीनन्दनं सदा।
चतुर्भुजं कृपासिन्धुं गणेशं वरदं मुदा।।
—भावप्रकाशे जीवनाथस्य

151. वन्देऽहं गजवक्त्रमिन्दुविलसद्भालं विशालोदरम्
सिन्दूरारुणमस्तकं फणिफणाकल्पैरनल्पैर्युतम्।
शुण्डादण्डविराजमानविपुलोद्यद्दन्तकाण्डोज्वलम्
विघ्नध्वंसकरं भयार्त्तशरणं सिद्ध्यै गणानां पतिम्।।
—काव्यप्रकाशस्य टीकायां सुधासागरसमाख्यायां
भीमसेन दीक्षितस्य

152. वन्देऽहं पदपङ्कजं रसभरं नित्यं विभुं श्रीपदम्
विघ्नध्वंसपटीयसस्तवविभो देवाग्रपूजाग्रहम्।
जुष्टं विद्वदुपासकैः प्रतिदिनं मुक्तिक्रमान्वेषिभिः
तुष्टः चेत्सकलं मनोऽभिलषितं पूर्णं फलं दास्यसि।।

—सुकृत्यप्रकाशे ज्वालानाथमिश्रस्य

153. वहवो वर्णतोहीना यत्पादयुगले नताः।
सुवर्णाः स्युः सदा स्वान्ते तं गणेशं स्मराम्यहम्।।

—भर्तृहरिकृतश्रृङ्गारशतकस्य टीकायां
सुबोधिनीसमाख्यायां हरिलालस्य

154. वामाङ्कारुढवामोरुवक्षोजानीतपुष्करम्।
विघ्नवारणहर्यक्षं विघ्नराजमुपास्महे।।

—शिवभक्तविलासे

155. विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवी हव्यवाट्
विघ्नव्यालकुलोपमर्दगरुडो विघ्नेभपञ्चाननः।
विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाब्धिकुम्भोद्भवो
विघ्नाभ्रौघघनप्रचण्डपवनो विघ्नेश्वरः पातु नः।।

—देवतास्तोत्रे

156. विघ्नवारणविदारणसिंहं
विघ्नकाननमहीरुहदावम्।
विघ्नगाढतिमिरद्युमणिं तं
विघ्नराजमनिशं प्रणतोस्मि।।

—तिथिनिर्णयचक्रे

157. विघ्नानशेषाननिशं निघ्नन् न्यायादनेकधा।
विघ्नराजः सदा पायात् त्रिपुरघ्नाभिपूजितः।।

—मोक्षलक्ष्मीविलासे वल्लभस्य

158. विघ्नान्धकारहरणस्फुरणैकरूपम्
मिथ्याप्रपञ्चमनिरुक्त्युचितं विभेदम्।
वन्देऽखिलप्रकृतिमव्ययमुक्तिरूपम्
विघ्नेश्वरं सकलविघ्ननिवृत्तयेऽहम्।।

—अद्वैतरत्ने मल्लणाराध्यस्य

159. विघ्नारातिः प्रराजत्कठिनपृथुतरो दण्डकाष्ठालिमाल्ये
निर्गच्छद्रक्तधाराविरचितपरशुर्बुद्धिवृद्धिक्रियान्नः।
रक्षद्द्वैमातुरोऽयं मधुकरनिकराराजितो दण्डतुण्ड-
श्चञ्चच्चामीकराभोप्यतितरदुरितच्छेदकः सन्ततं सः।।

—कातीयगृह्यकारिकायां रेणुकायाः

160. विघ्नेशचरणाम्भोजमकरन्दोदबिन्दवः।
सिञ्चन्तु भारतीवल्लीं नतानां वदनालये।।

—मल्लारिमाहात्म्ये

161. विघ्नेशोऽवतु नो विघ्नादपारकरुणार्णवः।
यत्कृपालोकने लोका विशोका शं प्रपेदिरे।।

—आगमरहस्ये सरयूप्रसादद्विवेदिनः

162. विघ्नेशो विश्वमव्यात्कलमकुवलये पाशपद्मे विषाणम्
वामे दण्डेक्षुचापौ त्रिशिखमरिवहन् बीजपूरं च दक्षे।
संश्लिष्यन् सिद्धलक्ष्मीं मणिनिधिकलशप्रोल्लसन्नैजशुण्डः
प्रोद्यद्भास्वत्सहस्रप्रतिभटतनुरुक्तुन्दिलश्चन्द्रचूडः।।

—आनन्दरङ्गचम्प्वां श्रीनिवासस्य

163. विघ्नेशो वः स पायाद्विहृतिषु जलधीन् पुष्कराग्रेण पीत्वा
यस्मिन्नुद्धृत्य तोयं वमति बहुतरं दृश्यते व्योम्नि देवैः।
क्वाप्यम्भः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः क्वचिच्छ्रीः
क्वाप्यौर्वः क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्रादिसत्त्वाः।।

—सूक्तिमु० हनूमतः

164. विघ्नेशः सर्वविघ्नान्परिहरतु स यत्कर्णतालादुदञ्चद्-
वायुव्याघूतगण्डस्थलयुगलगलद्भूरिसिन्दूरपूरैः।
आरुण्याद्वैतभावं गतवति जगति क्वापि नो भाति भानु-
र्नैवासौ शीतभानुः क्वचिदपि नितरां भासते वा कृशानुः।।

—सुभा०सुधा०भा०

165. वितण्डचण्डयोगिनं समाजमध्यवर्त्तिनम्।
प्रशस्तभूतिभूषितं स्मरामि विघ्नवारणम्।।

—रेखागणिते जगन्नाथस्य

166. विमलमदजलौघस्योतमानोरुगण्ड-
स्थलनिकटनिकुञ्जद्भ्राजमानालिमालः।
जयति पृथुलकण्ठाबद्धमालेन्द्रनीला-
बलिरिवसुरसिद्धाराधितो विघ्नराजः।।

—तत्त्वदीपने अखण्डानन्दमुनेः

167. विश्वेशं मोक्षदातारं भैरवं भीतिनाशनम्।
बुद्धिप्रदं दुण्ढिराजं शिरसा नौमि सादरम्।।

—भर्तृहरिकृतवैराग्यशतकस्य टीकायां
सुबोधिनीसमाख्यायां हरिलालस्य

168. वृहद्रदनदारुणं दृढ़सुमेरुरेणूद्भटं
सुगन्धिमदिरामदप्रमुदितालिझङ्कारितम्।
अनेकरणदुन्दुभिध्वनिविभिन्नगण्डस्थलं
महागणपतेर्मुखं दिशतु भूरिभद्राणि वः।।

—सक्रै—प्रस्तराभिलेखे

169. व्यावलात्करफूत्कृतिनिरस्तपूर्वापरप्रचुरविघ्नः।
स व्यापसव्यलक्ष्यो गणाधिपो जयति सार्वभौम इव।।

—रसमीमांसायाष्टीकायां गङ्गारामस्य

170. शरद्धिमरश्मिवलक्षवृहत्तरमूर्त्तिलसद्भुजगम्
मतङ्गवक्त्रमविघ्नकरं मम मानसशृङ्खलितम्।
कपोलगलन्मदवारिविलोलमधुव्रतहर्युपलै-
रलङ्कृतमहमाकलयेऽनिशमीशसुतं गणपतिम्।।

—लोकोक्तिमुक्तावल्यां दक्षिणामूर्त्तेः

171. शिवयोर्भजनातिगौरवाद्यत्सुतलीलाधृतकुञ्जरास्यरूपम्।
अपहन्तु ममान्तरं तमस्तत्सतानन्दमयं महोमहीयः।।

—बीजपल्लवे कृष्णदैवज्ञस्य

172. शिवाशिवतनूजोऽपि त्रिलोकी शिवकारकः।
वक्रतुण्डोऽपि सुमुखो वस्तं वन्दे गणाधिपम्।।

—श्रीहर्षकृतनैषधमहाकाव्यस्य टीकायां
जीवातु—समाख्यायां मल्लिनाथस्य

173. शुण्डादण्डाभिरामं मणिमयमुकुटं कुण्डलद्योतितास्यम्
मुक्ताकल्पाङ्गदाद्यैर्विलसितवपुषं स्वर्णयज्ञोपवीतम्।
दोर्दण्डैर्निर्भयत्वाङ्कुशवरपरशून् संदधानं गणेशम्
वन्देऽहं स्रग्धराभ्यामभिनवविलसत्कामिनीभ्यामुपेतम्।।

—रमलसिक्तायां सोमनाथस्य

174. शुण्डादण्डं कुण्डलीकृत्य कूले क्रीडन् देवो देवनद्याः प्रतीतः।
आखुं कृत्वा भूमिगर्ते विशन्तं कर्षन् दोर्भ्यां मङ्गलं संतनोतु।।

—वाक्यपदीर्यस्य टीकायां अम्बाकर्त्री—
समाख्यायां रघुनाथशर्मणः

175. शेषाहेः फणभङ्गभीरुरवनौ मन्दं निधत्ते पदम्
चीत्कारं जगदण्डसम्पुटभिदाभीत्या विधत्ते मनाक्।
नोच्चीयेत जगज्जवादिति शनैः कर्णाञ्चलं दोलय-
त्येवं योऽखिललोकरक्षणचणः पायाद्गणेशस्स वः।।

—मुद्राराक्षसटीकायां ढुण्ढिराजस्य

176. श्च्योतन्मदाम्बुभरनिर्भरचण्डगण्ड-
शुण्डाग्रशौण्डपरिमण्डितभूरिभृङ्गान्।
विघ्नानिवानवरतं चलगण्डतालै-
रुत्सारयञ्जयति जातघृणो गणेशः।।

—बाणभट्टकृतहर्षचरितस्य टीकायां सङ्केताख्यायां शङ्करस्य

177. श्रीकण्ठाचलमेखलापरिणमत्कुम्भोऽद्रिबुध्यारद-
प्रान्तोत्तुम्भितसम्भृताब्दगलितैः शीतैरपां सीकरैः।
निर्वाणे मदसंज्वरे प्रमुदितस्तेनातपत्राश्रियं
विश्राणेन निरन्तरं दिशतु वः श्रीविघ्नराजो मुदम्।।

—निघण्टुराजे नरहरेः

178. श्रीदं सदाहं हृदयारविन्दे पादारविन्दं वरदस्य वन्दे।
मन्दोऽपि यस्य स्मरणेन सद्यो गीर्वाणवन्द्योपमतां समेति।।

—जातकाभरणे ढुण्ढिराजदैवज्ञस्य

179. श्रीमद्गङ्गातरङ्गावलिवलितवपुः काशिकाकाशिकास्ते
विश्वाधीशोप्यशेषोद्धत्तजडजनतातारकस्तारकेण।
नित्यं यत्राधिवासं सहगिरिसुतया संदधत्सिन्धुरास्य-
स्तत्सूनुः श्रीगणेशः शमयतु नितरामन्तरायं कृतौ नः।।

—माधवनिदानस्य टीकायां रुग्विनिश्चयार्थ—
प्रकाशिकाख्यायां गणेशस्य

180. श्रीमद्भ्रमद्भ्रमरराजिविराजमान-
गण्डस्थल- स्खलदमन्द-मदप्रवाहः।
प्रत्यूहनाशविधये भुवनैकवन्द्यः
पायादपारमहिमा गिरिजात्मजन्मा।।

—प्रश्नमाणिक्यमालायां परमानन्दशर्मणः

181. श्रीलम्बोदरमेकदन्तममलं तत्त्वार्थसिद्धिप्रदम्
कर्पूरादिसुगन्धवस्तुनिचयैरभ्यर्च्य गौरीसुतम्।

उद्गच्छन्मदपानमत्तमधुपोन्नादश्रुतिस्नेहिनम्
व्यक्तं वच्मि गुणान्महामतिसुतस्येशस्य दूर्वाससः।।

—रसिकरमणकाव्ये रघुनाथस्य

182. श्रीशाद्यैः सहितं गजेन्द्रवदनं श्रीशारदालङ्कृतम्
पात्रं सोदकपूर्णमीड्यकलशं पाशाक्षसूत्रं भुजैः।
बिभ्राणं शुचिनागसम्भवलसत्कायं सहस्रार्कभम्
वन्दे मूषकवाहनं गणपतिं त्रैलोक्यचिन्तामणिम्।।

—होरासारसुधानिधौ नारायणस्य

183. श्रुतिमकुटतटविभूषणतत्त्वमणिस्फुरणदीप्तचरणयुगम्।
विघ्नविभेदनदक्षं विघ्नेशं विघ्नशान्तये नौमि।।

—उपनिषत्सारसङ्ग्रहे सुब्रह्मण्यस्य

184. श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः
क्षीराब्धौ रत्नपीठे सुरतरुविमले रत्नसिंहासनस्थम्।
दोर्भिः पाशाङ्कुशेष्टाभयधृतिरुचिरं चन्द्रमौलिं त्रिनेत्रम्
ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम्।।

—पथ्यापथ्यविनिश्चये

185. सकलदुरितदात्रं पार्वतीप्रेमपात्रम्
अरुणललितगात्रं विश्वनाथैकपुत्रम्।
रचितविविधचित्रं हेमभूषाविचित्रम्
मणिखचितसुछत्रं नौमि गं स्वाखुपत्रम्।।

—श्रीसूक्तविधाने वैद्यनाथस्य

186. सकलदुरितहर्त्ताभीष्टसिद्धिप्रकर्त्ता
निगमसमुपगीतः शेषयज्ञोपवीतः।
ललितमधुकराली सेवितो गण्डपाली-
तटभुवि गणराजः पातु वो विघ्नराजः।।

—खलरि—प्रस्तराभिलेखे हरिब्रह्मदेवस्य

187. सदर्चनाद्यस्य महेश्वरोऽपि कार्येषु धत्ते विभुतां न जातु।
तं विघ्नविच्छित्तिकरं गणेशं सिन्दूरपूरारुणमानमामि।।

—सूर्यसिद्धान्तोदाहरणे विश्वनाथस्य

188. सन्ध्यानृत्तोत्सवे ताराः करेणोद्धूय विघ्नजित्।
सीत्कारसीकरैरन्याः कल्पयन्निव पातु वः।।

—कथासरित्सागरेप्रथमेलम्बके सोमदेवभट्टस्य

189. सन्ध्यासिन्दूररागारुणगगनतलासङ्गिगङ्गोत्तमाङ्ग—
त्वङ्गन्नक्षत्रमालाकृतरुचिररुचिः कर्णशङ्खीकृतेन्दुः।
निस्तोयाम्भोदवृन्दैः श्रुतियुगलचलच्चामराडम्बरश्री-
रव्याजालङ्कृतिर्वः प्रवितरतु गणग्रामणीर्मङ्गलानि।।

—सदुक्ति० वङ्गस्य

190. सर्वसिद्धिसदनेऽखिलवन्द्ये दुष्कृतौघविनिवारणदक्षे।
विघ्नराजपदपङ्कजयुग्मे चञ्चरीकसममस्तु मनो मे।।

—मुहूर्त्तचिन्तामणौ शिवदैवज्ञस्य

191. सर्वाणि कर्माणि समृद्धिमन्ति
भवन्ति यत्पूजनया पुरस्तात्।
नमो निधीनामधिपाय तस्मै
कस्मैचिदस्मै गणनायकाय।।

—महुवा—अभिलेखे

192. सर्वाभीष्टफलं यस्य पदाराधनतत्पराः।
लभन्ते मनुजास्तस्मै गणाधिपते नमः।।

—दिल्लीसंग्रहालयस्थसर्बन—अभिलेखे

193. स वो विघ्नेश्वरः पायान्नमितोन्नमितेव यम्।
अनुनृत्यति नृत्यन्तं सन्ध्यासु भुवनावली।।

—कथासरित्सागरे त्रयोदशे लम्बके सोमदेवभट्टस्य

194. सिद्धिबुद्धिप्रदातारं विघ्नव्यूहविदारणम्।
महागणपतिं वन्दे लक्ष्मीविष्ण्वादिभिर्वृतम्।।

—रुद्रजपहोमप्रयोगे अनन्तदेवस्य

195. सिद्धौघैस्सत्सिद्ध्यै ध्येयः करजलदगलितदानाद्भिः।
शमयतु विघ्नदावाग्निं विघ्नेशो निघ्ननिर्विघ्नः।।

—सूक्तादर्शे कविताण्डवीयस्य

196. सिन्दूरपूरादरुणङ्क्लाधरकलाधरम्।
सन्ध्याम्बरमिवावन्दे गणेश्वरमहं वपुः।।

—सङ्गीतरघुनन्दने विश्वनाथसिंहजूदेवस्य

197. सिन्दूरप्रकरस्तपः करिशिरः क्रोडे कषायाटवी-
दावार्चिर्निचयः प्रबोधदिवसप्रारम्भसूर्योदयः।
मुक्तिश्रीकुचकुम्भकुङ्कुमरसः श्रेयस्तरोः पल्लवः
प्रोल्लासक्रमयोर्नखद्युतिभरः पार्श्वप्रभोः पातु नः।।

—सूक्तिमुक्तावल्याष्टीकायां सोमप्रभस्य

198. सिन्दूररेणुपटलद्युतिजुष्टमूर्त्ति-
र्घर्मांशुभानुपटलाभिनिविष्टमूर्त्तिम्।
इन्दुं विडम्बयति यो गणराजिनाथो
विघ्नच्छिदस्तु मम भक्तिवशीकृतात्मा।।

—पञ्चपादिकाव्याख्यायां विज्ञानवासयतेः

199. सिन्दूरारक्तशुण्डं सकलबुधजनानन्दकन्दप्रचण्डम्
माद्यन्मातङ्गवक्त्रं प्रकटकटलसद्दानपूराभिरामम्।
कामं भृङ्गाङ्गनाभिर्विरचितसरसोद्गीतसंशोभिगण्डम्
प्रत्यूहध्वान्तधारातरुणिमतरणिं वक्रतुण्डं नमामि।।

—प्रश्नसुधाकरे

200. सिन्दूरारुणगण्डमण्डलमदामोदभ्रमद्भृङ्गिका-
झङ्कारेण कलेन कर्णमुरजध्वानेन मन्द्रेण च।
तत्तौर्यत्रिकरीतिमेति शिरसः शश्वन्मदान्दोलनम्
यस्य श्रीगणनायकः स दिशतु श्रेयांसि भूयांसि वः।।

—मुद्राराक्षसस्य व्याख्यायां ढुण्ढिराजव्यासयजनस्य

201. सिन्दूरारुणविग्रहं निजकलां भाले दधानः करैः
वेदैरङ्कुश-पाश-कल्पलतिकादन्तानन्तो हि यः।
त्र्यक्षो-रक्षणदक्ष इक्षु-रतिभृत् वक्षो-बलद्धारकः
दान्तः सन्ततमस्तु दन्तिवदनो मच्छ्रेयसे विघ्नहृत्।।

—कृत्यसागरे रत्नपाणेः

202. सिन्दूरारुणशुण्डमन्दचलनव्याजान्निजानां भयम्।
भक्तानां विनिवारयन्तमधुना वन्दे गणेशं मुदा।।

—अश्विनीकुमारस्तुतिव्याख्यायां सदाशिवस्य

203. सिन्दूरेण विराजितं त्रिनयनं दिक्संख्यदोर्भिर्युतम्
भक्तानुग्रहकारकं प्रमदयाश्लिष्टं सदानन्ददम्।
अष्टाविंशतिवर्णकैश्च सततं यं चिन्तयन्ते जना-
स्तं देवं गणपं स्मरामि सततं चन्द्रार्द्धचूडं विभुम्।।

—सिद्धान्तकौमुद्याष्टीकायां सुबोधिनी—समाख्यायां जयकृष्णस्य

204. सिन्धुरबन्धुरवदनं कदनं सर्वस्य निघ्नविघ्नस्य।
सङ्कल्पकल्पवृक्षं निगमसमक्षं भजे गणाध्यक्षम्।।

—कुण्डकल्पलतायां दुण्ढिराजसूनुपुरुषोत्तमस्य

205. सिन्धुरास्यं सर्वभूतैरुपास्यं देवैर्वन्द्यं मङ्गलादिं गणेशम्।
विघ्नानां वै कोटिविच्छेदकारं वन्दे नित्यं सर्वदं सर्वरूपम्।।

—रामार्णवे

206. सुपर्णाभयं स्वोरगानां ददानो-
ऽप्यपर्णासुखः स्वर्णवर्णारथस्थः।
करे सप्तपर्ण-स्फुरद् गन्धिरद्धा
मुखं सूर्पकर्णः सुवर्णं करोतु।।

—अमरकाव्ये रणछोडभट्टस्य

207. सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः।।

—विवाहपद्धतौ

208. सुरासुरशिरोरत्नमरीचिखचिताङ्घ्रये।
विघ्नान्धकारसूर्याय गणाधिपतये नमः।।

—न्यायमञ्जर्यां जयन्तभट्टस्य

209. स्पन्दद्गण्डप्रगुञ्जद्भ्रमरकनिकरभ्राजमानो दधानो
दीव्यत्सिन्दूरधूलीचयरुचिररचितं मस्तकं दन्तिवक्त्रः।
आश्च्योतत्पुष्कराम्भो विशदकणगणैः प्लावयित्वाशुपापम्
युष्माकं हर्षलोलच्छ्रुतियुगमरुताचारिवृन्दं धुनोतु।।

—वृत्तरत्नावल्यां मणिराममिश्रस्य

210. स्वस्वाभिलाषं नहिलब्धुमीशा
निर्विघ्नमीशानमुखाः सुरौघाः।
विना प्रसादं किल यस्य नौमि
तं दुण्ढिराजं मतिलाभहेतोः।।

—वर्षतन्त्रे

211. हस्तपङ्कजनिविष्टमोदकव्याजसञ्चरदशेषपुमर्थम्।
नौमि किञ्चिदवधूनितशुण्डादण्डकुण्डलितमण्डितगण्डम्।।

—सुभा०सुधा०भा०

# बालो गणेशः

212. अध्यारुढः कपर्दं पितुरमरधुनीं हेलया गाहमानः
कर्षन्हर्षातिरेकात् कनककमलिनीषण्डमुद्दण्डवृत्या।
अन्तर्मग्नः कराग्रं फणिपतिशिरसि स्वैरमाधाय तोयम्
गुञ्जन्सिञ्चन्नधस्तात् प्रमथपतिशिशुर्भाति बालो गणेशः।।

–विद्याधरकृतएकावल्याष्टीकायां तरलाख्यायां
मल्लिनाथस्य

213. अवतु सततं शिवाङ्कशायी शिशुरफणीकृतदानवारियत्नः।
तदनुकमलभूकृतप्रणामो गिरितनयार्पितपादपद्ममालः।

–तत्त्वनिर्णये पक्षधरस्य

214. आलिङ्ग्य गाढमुदरं पितुरर्द्धजाने–
रुत्सङ्गवर्त्यवतु बालगजाननो नः।
यत्कुम्भयोर्गिरिसुताकुचपार्श्वभाजोः
स्तन्यं पिपासति गुहस्त्रिभिराननाब्जैः।।

–साहित्यरत्नाकरे धर्मसूरिणः

215. क्रोडं तातस्य गच्छन्विशदबिसधिया शावकं शीतभानो–
राकर्षन्भालवैश्वानरनिशितशिखारोचिषा तप्यमानः।
गङ्गाम्भः पातुमिच्छन्भुजगपतिफणाफूत्कृताद्धूयमानो
मात्रा सम्बोध्यनीतो दुरितमपनुयाद् बालवेशो गणेशः।।

–अन्त्याक्षरीश्लोकसङ्ग्रहे

216. गलद्दानोद्रेकभ्रमदलिकदम्बावृतशिरो-
धुनानस्सन्तोषादिव निजगुरोस्ताण्डवविधेः।
प्रचण्डैर्दोर्दण्डैः प्रबलतरविघ्नोपशमनो
मनोगम्यं भव्यं वितरतु शिशुः शैलदुहितुः।।

–तर्कसङ्ग्रहचन्द्रिकायां मुकुन्दभट्टस्य

217. गिरिशशिरसि यच्छन्हस्तमिन्दोः कलायां
मुहुरमलमृणालीग्रासगृध्नुः शिशुत्वे।
जयति विधुतमूर्धोन्माललीलाम्बुजेन
स्मितिकुपितमृडानीताडितो नागवक्त्रः।।

—प्रस्तराभिलेखे धङ्गदेवस्य

218. देवदानवकृतस्तुतिभागं हेलया विजितदर्पितनागम्।
भक्तविघ्नहनने धृतयत्नं तं नमामि भवबालकरत्नम्।।

—बुधभूषणे शम्भुनृपस्य

219. पाशाङ्कुशौ च दधतं करिदन्तहस्त-
मन्येन दाडिमफलं रुचिरं त्रिनेत्रम्।
वन्दे महेशतनयं गुहपूर्वजात-
मद्रीन्द्रजाप्रियशिशुं धृतविघ्नराजम्।।

—चिदम्बरमन्त्रयन्त्रस्य व्याख्यायां चक्रप्रकाशिकाख्यायां

220. रिङ्गन्नुत्सङ्गरङ्गे निजरदनधिया शङ्करस्योत्तमाङ्गा-
दाकर्षन्निन्दुलेखां पितरि गतरदस्तेयमारोपयँश्च।
मातुः प्रोत्साहयन्त्याः स्मितिशुचिवदनं वीक्षमाणः सहासं
बालो वात्सल्यभूमिः कलयतु मुदितो मङ्गलान्येकदन्तः।।

—श्रीरङ्गम्–अभिलेखे मल्लिकार्जुनस्य

221. वात्सल्यात्पितरौ कपोलयुगलं स्वस्याऽगतौ चुम्बितुं
दृष्ट्वाऽकुञ्चितमास्यपद्ममलं सेषत्स्मितं सत्वरम्।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते अभूतां तयो-
रित्थं येन विनोदितौ स भगवान्बालो गजास्योऽवतु।।

—संस्काररत्नमालायां गोपीनाथदीक्षितस्य

222. शुण्डाकृष्टमुमाकुचाद्बहुपयः पीत्वा गजास्यशिशुः
सन्तुष्टः स्नुतमेतदन्यकुचकं स्कन्दाननेष्वर्पयन्।
दुग्धं मुग्ध पिबानुज क्षुधमितस्त्वं भीतिहार्दाद्वदन्
हर्षं वर्षयति स्वमातृमनसि स्वस्तिप्रदः सोऽस्तु वः।।

—चातुर्मास्यव्रतकल्पवल्यां विरुपाक्षस्य

223. शुण्डादण्डविलोडनैरिव मुहुर्द्राग्वारयन्तं जन-
प्रत्यूहानिरुषानिशाकरकराघातव्रतं बिभ्रता।
दन्तद्योतितदिङ्मुखेन हसितेनानन्दयन्तं शिवौ
शान्तं तच्छिशुमाश्रयेऽहमनयोः खेलन्तमारात्पुनः।।

—विधिरसायनदूषणे शङ्करभट्टस्य

224. सिन्दूरपूरपरिपूरितमध्यभालं
मत्तालिवृन्दपरिचुम्बितगण्डमालम्।
शुण्डाप्रयातविनिवारितविघ्नजालं
वन्दे गणेशमवनीन्द्रसुतैकबालम्॥

—अनूपविवेके अनूपसिंहस्य

## गजाननः

225. अनन्तशास्त्रं बहुशब्दपादम्
शब्दस्य कर्णौ ग्रहणे च शक्तौ।
गजस्य दीर्घाविति तौ विचार्य
गजाननं येन धृतं तमीडे।।

—विष्णुशर्माकृतकीर्त्तिप्रकाशस्य टीकायां
नन्दकिशोरशर्मणः

226. अनुसंहितं हृदि यदीयबृंहितम्
भवसृष्टिसाधनसमष्टिरीशितुः।
इदमस्तु वस्तु शिवताति निस्तुल-
द्युति कन्धरानधरसिन्धुराकृतिः।।

—प्रक्रियाकौमुद्याः व्याख्यायां कविकौमुदीसमाख्यायां
कल्यलक्ष्मीनृसिंहस्य

227. अलिकुलमण्डितगण्डं प्रत्यूहव्यूहतिमिरमार्तण्डम्।
सिन्दूरारुणशुण्डं देवं वेतण्डतुण्डमवलम्बे।।

—प्रक्रियाकौमुद्याः व्याख्यायां प्रकाशसमाख्यायां कृष्णदत्तस्य

228. अलिकुलवृतगण्डं भालशालीन्दुखण्डम्
गलमिलदहितुण्डं भूरिसिन्दूरशुण्डम्।
भजदधिगतपण्डं सर्वदेवप्रचण्डम्
पृथुललितपिण्डं नौमि तं वक्रतुण्डम्।।

—पद्धतिभूषणे सोमदैवज्ञस्य

229. अविरतमदधाराधोरणीपारणोद्य-
न्मदमधुकरमालाकूजितोद्घोषिताशम्।
मम मनसि समिन्धां सिन्धुरेन्द्राननं तत्
किमपि कनकशैलप्रस्थसच्छायमोजः।।

—मयूरसन्देशे उदयस्य

230. अविरलमदधाराधौतकुम्भः शरण्यः
फणिवरवृतगात्रः सिद्धसाध्यादिवन्द्यः।
त्रिभुवनजनविघ्नध्वान्तविध्वंसदक्षो
वितरतु गजवक्त्रः सन्ततं मङ्गलं वः।।

—सुभा० सुधा० भा०

231. अव्यक्ताक्षरनिर्भरध्वनिजपस्त्यक्तान्यकर्माश्रमः
स्वं देहात् शितिमानभुज्झितुमनादानाम्बुसम्वर्द्धितः।
यत्कुम्भाचलगस्तपांसि वितनोत्यद्यापि भृङ्गव्रजः
प्रत्यूहापगमोन्नतिर्गजमुखो देवः स वोऽस्तु श्रिये।।

-अर्बुदपर्वत—अभिलेखे समरसिंहस्य

232. अशेषविघ्नप्रतिषेधदक्ष-मन्त्राक्षतानामिवदिङ्मुखेषु।
विक्षेपलीलाकरशीकराणां करोतु वः प्रीतिमिभाननस्य।।
—विक्रमाङ्कदेवचरिते विद्यापतिबिल्हणस्य

233. अस्तु महो हस्तिमुखं स्वस्तिकरं वस्समस्तजनिहेतुः।
यत्कटरटदलिमाला विलसति हरिनीलहारसमलक्ष्मीः।।
—कोण्डुकुरु— पत्राभिलेखे अल्लयडोड्डस्य

234. अस्तु हस्तिमुखं वस्तुस्वस्तिकृत् पूर्णविग्रहम्।
भाति यत्कटभृङ्गालिरैन्द्रनीलीव मालिका।।
—गनदेव— दानपत्राभिलेखे कोण्डाविड्डुमहोदयस्य

235. आतुङ्गमस्तकमनस्तमितानुभाव-
मातङ्गभारहरमङ्घ्रिसरोजभाजाम्।
मोदं करोतु शिवयोस्सुकृतैकमत्यम्
मातङ्गमानुषवपुर्महितं महो वः।।

—रासोत्सवे

236. आदायादायकुम्भद्वयनिहितमिव प्रार्थितं प्रार्थकेभ्यो
भूयो भूयः फलं यो वितरति भगवान्वारणास्यः सदैव।
प्रत्यूहव्यूहशैलव्रजविशकलनप्रौढिदम्भोलिदंष्ट्रः
शुण्डादण्डस्य नित्योन्नमनविनमनव्याजतस्तं भजामः।।
—हरिवंशविलासे निबन्धराजे संस्कारकौतुके
रामपण्डितात्मजनन्दपण्डितस्य

237. आयाहि त्वरितं गणेश! दुरितप्रध्वस्तविश्रान्तताम्
प्राप्तः पुत्रक मोदकं करगतं संभक्षय त्वं क्षणम्।
इत्युक्तेऽम्बिकया करेण कलयंस्तं तं प्रमोदालयम्
कुर्वन्यो मदयन्गजानन इह श्रेयस्करो वोऽस्तु सः।।
—स्मृतिचिन्तामणौ गङ्गादित्यस्य

238. आरक्ताभं त्रिनेत्रं पृथुतरजठरं वेदहस्तान् दधानम्
बिभ्राणं मौलिदेशे हिमकरशकलं दानधाराप्तकुम्भम्।
ब्रह्मेन्द्राद्यैः समस्तैरमरपरिवृढैः सेवितं शुभ्रदन्तम्
भोगीन्द्राढ्यं प्रसन्नं सकलशुभकरं तं भजेऽहं गजास्यम्।।
—मन्त्रचन्द्रिकायां गोस्वामिजनार्दनस्य

239. आविरस्तु महस्तन्नो गौरीसन्ध्याघनोदितम्।
अन्तराय तमोहन्तृ नरस्तम्बेरमाकृति।।
—न्यायचन्द्रिकायां आनन्दपूर्णमुनीन्द्रस्य

240. उच्चैरुत्तालगण्डस्थलबहुलगलद्दानपानप्रमत्त-
स्फीतालिव्रातगीतिश्रुतिविधुतिकलोन्मीलितार्द्धाक्षिपक्ष्मा।
भक्तप्रत्यूहपृथ्वीरूहनिवहसमुन्मूलनोच्चैरुदञ्च-
च्छुण्डादण्डाग्र उग्रार्भक इभवदनो वः स पायादपायात्।।
—सुभा०सुधा०भा०

241. उच्चैर्ब्रह्माण्डखण्डद्वितयसहचरं कुम्भयुग्मं दधानः
प्रेङ्खन्नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामः।
देवः शम्भोरपत्यं भुजगपतितनुस्पर्द्धिवर्द्धिष्णुहस्त-
स्त्रैलोक्याश्चर्यमूर्त्तिः स जयति जगतामीश्वरः कुञ्जरास्यः।।
—प्रस्तावरत्नाकरे हरिदासस्य

242. उत्तुङ्गकुम्भयुगसान्द्रविलिप्तचारु
सिन्दूरपूररुचिराय गजाननाय।
दूरानताखिलसुपर्वकिरीटरत्न
नीराञ्जिताङ्घ्रियुगलाय सदा नतोस्मि।।
—उदाहरणचन्द्रिकायां वैद्यनाथस्य

243. उद्दिश्यामरनिम्नगां गतवतोः श्रुत्वा कलिं शैशवे
यः साक्षात्करवाणि तामिति जटाजूटोपकण्ठं गतः।
पीत्वा पुष्कलपुष्करेण न किमप्यत्रेति विस्मापयन्
पित्रोर्विग्रहवग्रहं विहितवान्पायाद्गजास्यः स वः।।

—कालिदासकृत—अभिज्ञानशाकुन्तलस्य टीकायां
अर्थद्योतनिकाख्यायां राघवभट्टस्य

244. उद्यत्सिन्दूरपूरस्फुरदरुणकटप्रोल्लसद्दानगन्ध-
व्यालुब्धस्निग्धभृङ्गावलिविततचलत्पक्षसम्वीज्यमानः।
प्रत्यूहव्यूहमध्यापतितजनसमुद्धारणे जागरुकः
कल्याणं कोऽपि कुर्यान्निरुपधिकरुणाकोमलो वारणास्यः।।

—भास्कराचार्यकृतलीलावत्याः व्याख्यायां
लीलावतीकटाक्षसमाख्यायां

245. एकं स्तनं धयन्नपि तिर्यग्वलनोर्ध्वशुण्डयेन्दुसुधाम्।
वरदानवदान्यकरः किरतु स विघ्नान् द्विपेन्द्रास्यः।।

—गङ्गावतरणचम्प्वां शङ्करदीक्षितस्य

246. कपोलप्रोदञ्चन्मदमधुरतालुब्धमधुप-
स्फुरद्गुञ्जागीतिः श्रवणपुटतालो गजमुखः।
चलच्छुण्डादण्डाकलितकलकण्ठः प्रथयता-
न्मुदं बिभ्रत्सूत्रं त्रिभुवनमहामण्डपविधौ।।

—कुम्भलगढ—अभिलेखे

247. कपोलविगलल्लोलदानपानीयपिच्छिलम्।
भ्रमद्भ्रमरझाङ्कारं वन्देऽहं द्विरदाननम्।।

—योगतरङ्गिण्यां त्रिमल्लभट्टस्य

248. करदानाम्भसार्द्रं यः कुञ्चिताग्रं प्रसारयन्।
ददत्सिद्धिमिवाभाति स पायाद्वो गजाननः।।

—कथासरित्सागरे सप्तमे लम्बके सोमदेवभट्टस्य

249. करिवदनं तं कलये करिवदनन्तप्रदानदक्षकरम्।
यच्चरणाब्जस्मरणं शरणं निर्विघ्नकार्यसिद्धीनाम्।।

—श्रीहरिचरितमहाकाव्ये श्रीहरिपद्मनाभशास्त्रिणः

250. करेण कुञ्चिताग्रेण लीलयोन्नमितेन यः।
भाति सिद्धीरिव ददत्स पायाद्वो गजाननः।

—कथासरित्सागरे अष्टादशलम्बके सोमदेवभट्टस्य

251. कलाकलितविष्टपः कटमदप्रवाहापगा
कलापिसुरभिभ्रमद्भ्रमरचाटुसत्कारवान्।
कलानिधिकलाधराचलसुताहृदानन्दनः
कलाधिगमकौशलं कलयतात्करीन्द्राननः।।

—स्कान्दे महापुराणे अगस्तसंहितायां हालास्य माहात्म्ये

252. कल्याणानि तनोतु कश्चन् पुमानर्द्धाङ्गदन्तावलो
गण्डाभोगविलोलुपानलिगणान् कर्णांचिलैश्चालयन्।
यत्पादाम्बुरुहावलम्बशरणाः पूर्वे पुमां सस्त्रय-
स्त्रैलोक्यस्थितिसर्गसंहृतिविधौ निर्विघ्नसिद्धोद्यमाः।।

—विद्यानाथकृत—प्रतापरुद्रीयस्य व्याख्यायां
रत्नार्पणाख्यायां कुमारस्वामिनः

253. कारणभूतो जगतां वारणवदनस्स विजयतां देवः।
भक्तजनप्रत्यूहप्रशमनपटुचरितसर्वस्वः।।

—तन्त्रसङ्ग्रहव्याख्यायाम्

254. कारणमेकं खगतां वारणमास्येन वारणं विपदाम्।
किमपि महोमहनीयं प्रत्यूहव्यूहवारणं वन्दे।।

—निर्णयामृते अल्लाडनाथसूरेः

255. काशीयज्ञोपवीतं विलसति वदने पुष्करं यस्य नित्यम्
देवानां नर्मदा श्रीर्मुकुटतटगता चन्द्रभागर्द्धिरस्ति।
यस्यावन्ती कृपाङ्घ्रिद्वयमवनतसद्द्वारकं सिद्धिदाता
तीर्थानां राशिरित्थं स भवतु भजतां भूतये वक्रतुण्डः।

—आचार्यवंशावल्यां सदाशिवदीक्षितस्य

256. कुम्भस्थली रक्षतु वो विकीर्णसिन्दूररेणुर्द्विरदाननस्य।
प्रशान्तये विघ्नतमच्छटानां निष्ठ्यूतबालातपपल्लवेव।।

—नवसाहसाङ्कचरिते परिमलपद्मगुप्तस्य

257. गजरत्नं चिरत्नं तदद्भुतं श्रेयसेऽस्तु यत्।
पञ्चाननो लालयति क्षोणीभृद्भूगुहाश्रयः।।

—जानकीपरिणये चक्रकवेः

258. गजाननकटद्वन्द्वनिस्सृतामदनिर्झरी।
प्रक्षालयतु नः क्षिप्रं विघ्नसङ्घातकर्दमम्।।

—कात्यायनकृत—शुक्लयजुर्वेदप्रातिशाख्यभाष्ये अनन्तस्य

259. गजाननाय महसे प्रत्यूहतिमिरच्छिदे।
अपारकरुणापूरतरङ्गितदृशे नमः।।

—सुभा० सुधा० भा०

260. गजाननं चारुविशालनेत्रं मौञ्जीधरं मूषकवाहनं च।
चतुर्भुजं चञ्चलकर्णयुग्मं गजाननं शूलिसुतं भजेऽहम्।।

—शैवदीक्षाविधाने

261. गजास्यः पातु वो यस्य भाति दानान्तिकालिनः।
महाद्रिनिर्झरोपान्तकान्तनीलोपला इव।।

—गनपेश्वर— अभिलेखे गनपतेः

262. गजेन्द्रवदनं वन्दे प्रपन्नभयभञ्जनम्।
पार्वतीनन्दनं देवं कामदं सुरवन्दितम्।।

—वैद्यहृदयानन्दे योगिप्रहराजमहापात्रस्य

263. गणानामधिपः पायात् गण्डमत्तालिनिस्वनैः।
भक्तसङ्घातविघ्नौघान् वारयन् वारणाननः।।

—वेलिचेर्ल— अभिलेखे प्रतापरूद्रगजपतेः

264. गण्डद्वन्द्वगलन्मदद्रवमिलन्मैलिन्दवृन्दस्वन
श्लाघान्दोलनलोलमौलिविलसद्बालेन्दुचूडामणिम्।
चञ्चत्कर्णविराजमानचमरद्वन्द्वोत्थमन्दानिल स्पर्शो-
न्मूलितभालघर्मसलिलं वक्ष्ये गजेन्द्राननम्।।

—भैरवार्च्चापारिजाते जैत्रसिंहदेवस्य

265. गण्डस्थलगलदविरलमदजलकल्लोलचपलरोलम्बः।
विघ्ननिवारणकरेण करेणुवदनः करोतु कल्याणम्।

—आख्यातशक्तिवादरहस्ये मथुरानाथतर्कवागीशस्य

266. गण्डस्थलद्वयगलन्मदवारिधारा
सौरभ्यलुभ्यदलिडिम्भकगुम्भनादैः।
वाचालिताखिलदिशं वरदं नतानाम्
वन्दामहे गजमुखं वयमादिदेवम्।।

—विनायकस्तोत्रे

267. गण्डस्थलस्खलदुदारमदाम्बुधारा
गण्डूषमत्तमधुपस्तुतिदत्तकर्णम्।
स्वर्णाद्रिकूटकषणादतितीक्ष्णदन्तम्
दन्तावलाननमुपैमि दुरिष्टशान्त्यै।।

—व्याकरणप्रवेशके

268. गण्डस्थलीगलदमन्दमदप्रवाह-
माद्यद्द्विरेफमधुरस्वरदत्तकर्णः।
हर्षादिवालसनिमीलितनेत्रयुग्मो
विघ्नच्छिदे भवतु भूतपतिर्गणेशः।।

—प्रश्नचण्डीश्वरे रामकृष्णस्य

269. गलद्गण्डपतद्भङ्गमण्डिताननपङ्कजम्।
विघ्नान्धकारमार्त्तण्डं वक्रतुण्डमुपास्महे।।

—सायनतत्त्वविवेके दुण्ढिराजस्य

270. गुणगुरुगौरीसिंहाद्यस्माद्भीता दिशां करिणः।
तमपि व्यथयन् स्वरवैः कोऽपि करीन्द्राननः पायात्।।

—उदयपुरस्थजगन्नाथरायमन्दिराभिलेखे

271. गौरीश्रवः केतकपत्रभङ्गमाकृष्य हस्तेन ददन्मुखाग्रे।
विघ्नं मुहूर्त्ताकलितद्वितीयदन्तप्ररोहो हरतु द्विपास्यः।।

—मुहूर्त्तचिन्तामणौ अनन्तदैवज्ञसूनुरामदैवज्ञस्य

272. गङ्गाधरसुतं देवं चन्द्रलेखावतंसितम्।
सिद्धिदं सर्वविद्यानां वन्दे दन्तावलाननम्।।

—ज्ञानप्रदीपके

273. घनदानजलार्द्रगण्डभित्ति-
श्रितपुष्पन्धयकैतवान्धकारम्।
अपनेतुमिवोद्गतार्चिरिन्दो-
र्दशनश्रीर्जयति द्विपाननस्य।।

—रामकीर्त्तिकुमुदमालायां त्रिविक्रमभट्टस्य

274. चलत्कर्णानिलोद्धूतसिन्दूरारुणिताम्बरः।
जयत्यकालेऽपि सृजन्सन्ध्यामिव गजाननः।।

—कथासरित्सागरे अष्टमलम्बके सोमदेवभट्टस्य

275. चिकुरभरविराजत्कान्तिकासाररत्ने
विगतबहुलरेखातुङ्गभङ्गेऽम्बिकायाः।
दरदलदरुणाम्भोजातमाकर्षयन् वः
कलयतु करिराजो युग्मनेत्रं करेण।।

—नामलिङ्गानुशासनव्याख्यायां अमरपदपारिजाताख्यायां मल्लिनाथस्य

276. जगदन्तरायराशिं संस्मृतमात्रोऽपि यो जरीजर्ति।
चर्कर्ति चास्मृतो यस्तं वन्दे कुञ्जराननं देवम्।।

—भागवतव्याख्यायां तत्त्वप्रदीपिकाख्यायां

277. जीयाद् दन्तिमुखो यस्मिन् जेतरि त्रिदशद्रुहाम्।
उदलासि धृतामोदैरुभयैर्दानवारिभिः।।

—पाण्ड्यकुलोदये मण्डलकवेः

278. जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलिं बध्नता
स्रष्टुं वारिभवोद्भवेन भुवनं शेषेण धर्त्तुं धराम्।
पार्वत्या महिषासुरप्रमथने सिद्धाधिपैः सिद्धये
ध्यातः पञ्चशरेण विश्वजितये पायात्स नागाननः।।

—संस्कृतभाषाप्रदीपे सखारामरावशर्मणः

279. तन्वन्सिन्दूरभासा दिशि दिशि सरसां सान्ध्यशोभामजस्रम्
कर्पूरक्षोदशीतोत्करजलकणिकाच्छर्दनैर्दुर्दिनाभाम्।
प्रत्यूहव्यूहभेदोद्धुरनिबिडघनोऽज्ञानवल्लीकुठारः
शुण्डादण्डः सदाऽव्यात्प्रकटितमहिमा वक्रतुण्डस्य युष्मान्।।

—गणेशपरिणये वैद्यनाथशर्मणः

280. तरुणतपनवर्णं कर्णलीलावधूत-
भ्रमरविततिगुञ्जाकर्णनोद्भूतहर्षम्।
अमरवरकिरीटोद्घृष्टपादाब्जमन्तः-
स्फुरतु दलितविघ्नं दन्तिवक्त्रं महोनः।।

—स्वराज्यसिद्धेः व्याख्यायां कल्पद्रुमाख्यायां गङ्गाधरसरस्वतीभिक्षोः

281. तर्जयन्निव विघ्नौघान्नमितोन्नमितेन यः।
मुहुर्विभाति शिरसा स पायाद्वो गजाननः।।

—कथासरित्सागरे षष्ठे लम्बके सोमदेवभट्टस्य

282. तुरीयममरुद्गणैर्नुतमुरीकृतास्त्रव्रजम्
करीशवदनं मनोमयदरीशयं भाविनाम्।
भवाब्धिलहरीतरिं प्रकृतिमाश्रये भासुरम्
सरीसृपकरं हरप्रियतनूजमंहोहरम्।।

—साहित्यकण्टकोद्धारे

283. ते दूरोद्दण्डशुण्डाकुहरकबलितोक्षिप्तसप्ताब्धिलब्ध-
स्वेच्छासेकप्रमोदप्रभवनवरवद्राविताशा गजेन्द्राः।
देवस्याकाण्डकण्डूकरकरटतटाटोपसंघट्टभग्न-
क्षोणीभृत्तुङ्गशृङ्गाः पुरमथनशिशोः पान्तु वो दुर्विलासाः।।

—सूक्तिमु० विश्वेश्वरस्य

284. तं गजास्यं स्तुतं देवैः प्रशान्तं विद्यया युतम्।
तन्त्रयन्त्रावृतं नौमि तन्वन्तं जगतां हितम्।।

—संस्काररत्नमालायां गोपीनाथदीक्षितस्य

285. दधानं भृङ्गालीरनिशममले गण्डयुगले
ददानं सर्वार्थान्निजचरणसेवासुकृतिने।

दयाधारं सारं सकलनिगमानामपि परं
गजास्यं स्मेरास्यं तमिह कलये चित्तनिलये।।

—वीरमित्रोदये परिभाषाप्रकाशे मित्रमिश्रस्य

286. दन्ताग्रनिर्भिन्नहिमाचलोर्वीरन्ध्रोत्थिताहीन्द्रमणिप्रभौघः।
नागाननः स्तम्भधिया कपोलौ घर्षन् पितृभ्यां हसितः पुनातु।।

—सुभा० सुधा० भा०

287. दन्ताञ्चलेन धरणीतलमुन्नमय्य
पातालकेलिषु धृतादिवराहलीलम्।
उल्लाघनोत्फणफणाधरगीयमान-
क्रीडावदानमिभराजमुखं नमामः।।

—माघकृतशिशुपालवधमहाकाव्यस्य टीकायां
सर्वंकषाख्यायां मल्लिनाथस्य

288. दन्तांशुमञ्जरितहस्तलताभिरामः
सिन्दूरचारुसुभगो मदनिर्झराद्यः।
देवः स कोऽपि नरसिन्धुरमूर्त्तिमाली
शर्माणि वो दिशतु सिद्धिविलासशैलः।।

—संस्कृताभिलेखे गुर्जरराजस्य

289. दुरितसमूहबलाहकपटलीसंहरणपवमान् ।
शिवयोरङ्कभरणं वन्दे देवं गजाननं मूर्ध्ना।।

—सुभा० सुधा० भा०

290. देव्या लीलाललितमधुरं लास्यमुल्लासयन्त्या
यः शृङ्गारो रहसि पुरतः पत्युराविष्कृतस्तम्।
वीर्यान्नृत्तैर्विकटगतिभिर्व्यञ्जयन् कुञ्जरास्यः
शम्भोः..........

—नृत्यरत्नावल्यां जायसेनापतेः

291. दोर्घोतद्दन्तखण्डः सकलसुरगणाडम्बरेषु प्रचण्डः
सिन्दूराकीर्णगण्डः प्रकटितविलसच्चारुचान्द्रीयखण्डः।
गण्डस्थानन्तघण्डः स्मरहरतनयः कुण्डलीभूतशुण्डो
विघ्नानां कालदण्डः स भवतु भवतां भूतये वक्रतुण्डः।।

—सुभा०सुधा०भा०

292. नमताशेषविघ्नौघवारणं वारणाननम्।
कारणं सर्वसिद्धीनां दुरितार्णवतारणम्।।

—कथासरित्सागरे एकादशलम्बके सोमदेवभट्टस्य

293. नमामिपर्शुहस्तं च गणनाथं गजाननम्।
महारूपं महाकायं सर्वसंकटनाशनम्।।

—संकष्टचतुर्थीव्रतकथायां

294. नमाम्यशेषविघ्नौघगारणं वारणाननम्।
कारणं चर्द्धिसिद्धीनां दुरितार्णवपारणम्।।

—कौमुदीकथाकल्लोलिन्यां त्रिपाठिनो रामशरणस्य

295. नाकेनाकेशमुख्याः सुरवरनिवहाः सन्ति येऽनन्तसंख्या
नाख्यामाख्यात्यमीषां कथमपि च मनःपूर्वकं वाङ् मदीया।
एकं हित्वैकेदन्तं सकलसुरशिरःसङ्घसङ्घर्षिताङ्घ्रिम्
शीघ्रं भक्तेष्टसिद्धिप्रदमिह सुखदं सादरं तं नमामि।।

—ग्रहलाघवस्य टीकायाम्

296. नागाननं नागकृतोत्तरीयं नगेशपुत्रीतनयं स्मरामः।
निर्विघ्नहेतोर्वरदं कृपालुं सचन्द्रभालं गिरिशस्य बालम्।।

—शब्दरत्नावल्याम्

297. नीलाम्बुजरुचिं देवं सकृद्ध्यान्ति मनोरथम्।
देवाः प्रणम्य यं सर्वे तं नमामि गजाननम्।।

—सर्वार्थचिन्तामण्याम्

298. पपौ समं यो मुखपुष्कराभ्याम्
स्तनौ जनन्याः सुभगाङ्कशायी।
स विघ्नराजो मम विघ्नजातं
भिनत्तु सस्मेरगजेन्द्रवक्त्रः।।

—सोमेश्वरदेवभट्टकृतरामशतकस्य हृदयरञ्जनी–
समाख्यायां टीकायाम्

299. पायाद्गजेन्द्रवदनः स इमां त्रिलोकीं
यस्योद्गतेन गगने महता करेण।
मूलावलग्नसितदन्तबिसाङ्कुरेण
नालायितं तपनबिम्बसरोरुहस्य।।

—सूक्तिमु० गणपतेः

300. पायाद्वः करिवदनः कृत-
निजदानस्तुताविवालिगणे।
निनदति मुहुरपि धत्ते
कर्णौ यः कर्णतालाभ्याम्।।

—दोनपुन्दि– पत्राभिलेखे नामयनायकस्य

301. प्रणतविबुधमौलिस्फाररत्नांशुगर्भा-
श्चरणनखरभासो भाति यो भक्तिभाजाम्।
दधदभिमतसिद्ध्यै कल्पवल्लीरिवाग्र्या
स जयति गजवक्त्रो दाननीरप्रसिक्तः।।

—लक्ष्मणोत्सवे लक्ष्मणस्य

302. प्रत्यूहतिमिरव्रातपराकरणपण्डितम्।
भवाचलोदितं नित्यं भजे गजमुखं महः।।

—पेन्तपवुपत्राभिलेखे छोणभक्तिराजस्य

303. प्रत्यूहरात्रिपरिमुद्रितसर्वलोक-
प्रज्ञासरोरुहविकासनसप्तसप्तिः।
श्रीमान् ममाखिलपदार्थयथार्थबोध-
दातास्तु सन्ततमुमातनुजो गजास्यः।।

—अप्पयदीक्षितकृत— आत्मार्पणस्तुतेष्टीकायां
भावलेशप्रकाशाख्यायां शङ्करनारायणस्य

304. प्रत्यूहव्यूहघातेऽनवरतमभितो यः सदोद्योगयुक्तः
शान्तिं शश्वच्च कुर्वन् दिशति प्रतिपलं साधकेष्टिं प्रसन्नः।
सम्पूज्यः सर्वकार्ये विबुधगणवरैर्दीपयन् स्वप्रकाशात्
सोऽस्मान् पापादपायाद्गजवदनवपुः शैलजानन्दनोऽत्र।।

—विश्वनाथकविराजकृतसाहित्यदर्पणस्यटीकायां
लक्ष्मीसमाख्यायां कृष्णमोहनशास्त्रिणः

305. प्रत्यूहाद्रितटीं विभेत्तुमनिशं भङ्क्तुं च दुःखाटवी
माहर्त्तुं फलमीप्सितेन विधिनाऽप्यायासितो मानुषैः।
श्रान्तोऽसाविति वाससा मदजलव्यालुम्पनोद्योगिनी-
मम्बां स्नेहकृपाकुलामुपहसन्नागाननः पातु नः।।

—उभयरुपके श्रीमहालिङ्गकवेः

306. प्रश्च्योतन्मदमन्थरभ्रमरिकाझङ्कारगीतं मुहुः
हेलाबृंहितवादनव्यतिकरं भावोल्लसत्प्रक्रियम्।
नृत्यन्नस्तु सुखाय वः करिमुखः पुण्योपहारैश्चिरा-
दानन्दी नटभावितैरिव यथाभावैः स सामाजिकः।।

—भावप्रकाशने शारवातनयस्य

307. प्राप्तः पातालमूलं मदसलिलझरैः प्लावयन् बाललीला-
मातन्वन्नेव कर्णेजपमधुरसमारम्भसंरम्भशीलः।
कूर्मे शालूकबुद्ध्या सरसबिसधिया शेषनागे च शुण्डा-
दण्डं व्यापारयिष्यंस्तदुपहितनुतिः पातु वेतण्डतुण्डः।।

—जानराजचम्प्वां कृष्णदत्तस्य

308. प्रारम्भे भरणे भङ्गे यन्मदस्यन्दबिन्दवः।
कारणानि प्रपञ्चस्य तं वन्दे वारणाननम्।।

—सौभाग्यरत्नाकरतरङ्गे

309. ब्रह्मादिसृष्टिकर्त्तृभ्यो माघन्निवमदालसः।
ब्रह्माण्ड इव कुम्भाग्रे बिभ्रदव्याद्गजाननः।।

—अधिकमासकथायां

310. ब्रह्माद्या बिवुधगणाः स्वकार्यसिद्ध्यै
यं विघ्नद्रुमदलनोद्धुरं प्रणम्य।
जायन्ते सपदि कृताखिलार्थसङ्घा-
स्तं दन्तावलवदनं नमामि नित्यमेव।।

—सिद्धान्तसार्वभौमे श्रीमुनीश्वरस्य

311. भक्त्यानमत्त्रिदशराजकिरीटकोटि-
रत्नावलीकिरणराजिविराजमानम्।
श्रीमत्करीन्द्रवदनस्य पदारविन्दद्वन्द्वम्
सदा जयति सिद्धिकरं क्रियाणाम्।।

—भौषज्यरत्नावल्यां गोविन्ददासस्य

312. भास्वानिव तमोवृत्तिं यन्नतिर्विघ्नसन्ततिम्।
निवर्त्तयति तं नित्यं वन्दे स्तम्बेरमाननम्।।

—शङ्करविजयविलासे

313. मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम्।
यद्दानतोयतरलैस्तिलतुलनाऽलम्बि रोलम्बैः।।

—सुभा०सुधा०भा०

314. मङ्गलं मम तनोतु गजास्यो
मन्दभावहरणे वरखङ्गः।

पण्डितो मधुरमोदकहस्तो
मण्डिताश्रितजनाखिलभाग्यः।।

—बालरामभारते बालरामवर्मणः

315. मत्तमतङ्गजवदनं सादितविघ्नावली सदनम्
गौरीहरयोस्तोकं पालितलोकं हृदा लम्बे।।

—कुण्डमण्डपसिद्धिव्याख्यायां विट्ठलदीक्षितस्य

316. मधुव्रताकारमुनीन्द्रवृन्द-
प्रपीतदानात्मरसप्रवाहम्।
अनन्तमध्यादिपरं महस्त-
न्नृहस्तिरूपं शरणं प्रपद्ये।।

—सुभद्राहरणे ब्रह्मदत्तनारायणस्य

317. मयूखवाहनारुढं सशक्तिं स्वायुधान्वितम्।
भक्ताभीष्टप्रदातारं तं नमामि गजाननम्।।

—बोधायनगृह्याधानविधानपद्धतौ

318. महः किमपि मन्महे शिवमनोविनोदास्पदम्
गजास्यमुमया सदाललितलालितं पालितम्।
अमन्दमदगण्डसम्मिलमिलिन्दमालाकुलम्
सविघ्नगणपं तथा गिरमपि स्तुमः कामदाम्।।

—भवभूतिकृत— उत्तररामचरितस्य टीकायां भट्टजीशस्त्रिणः

319. मातामहमहाशैलं महस्तदपितामहम्।
कारणं जगतां वन्दे कण्ठादुपरि वारणम्।।

—शतभूषण्यां अनन्तकृष्णशस्त्रिणः

320. यदार्याणां कार्येष्वभिमततमां सिद्धिमवहद्
यदार्द्रं कारुण्यादिव मदजलान्मानितनिजम्।

हठात् प्रत्यूहालिं दलयदलिमालामिव महः
समन्तात्तद् दन्तावलवदनमन्तर्विलसतु।।

—अज्ञातनाम्नो नाटकस्य प्रस्तावनाभागे शङ्करदीक्षितस्य

321. यद्गण्डमण्डलगलन्मदवारिधाराः
कर्णद्वयव्यजनवातविधूतिशीर्णाः।
भक्तान्तरायनिवहा इव सार्यमाणा
भान्ति द्विपेन्द्रवदनं तामुपाश्रयामः।।

—भवभूतिकृतमालतीमाधवस्य भावप्रदीपिकाख्यायां
टीकायां जगद्धरस्य

322. यस्मिन् प्रसादसुमुखे विमुखी भवन्ति
विघ्नाः समीहितविधौ दुरितैकनिघ्नाः।
सिन्दूरसुन्दरमुखं शिशुचन्द्रमौलिम्
स्तम्बेरमाननमहं तमिह स्मरामि।।

—विद्वच्चरितपञ्चके नारायणशास्त्रिणः

323. यस्य त्रिलोकजननी जननी भवानी
यस्येश्वरस्त्रिजगतां जनको गिरीशः।
यस्य स्मृतिर्निखिलविघ्नतमोविवस्वान्
सोऽयं करीन्द्रवदनो जयतात्कुमारः।।

—सिरसाभिलेखे

324. यस्य भृङ्गावलीकण्ठे सदा दानाम्बुपूरिते।
भाति रूद्राक्षमालेव स नः पायाद् गजाननः।।

—वृत्तरत्नावतंसवृत्तौ गणेशस्य

325. यः पीयूषमयूखशोभितशिरो देवः सुरेशार्चितः
शेषाशीविषभूषणो मदगलद्दानाम्बुपूरः परः।
कर्णान्दोलितचारुचामरमरुन्मालाविलासोल्लस-
च्चित्तोन्मत्तमतङ्गतुङ्गवदनः पायादपायात्स नः।।

—भास्कराचार्यकृतलीलावत्याः व्याख्यायां सूर्यकवेः

326. यां द्यूतकेलिविजिताद् दयितागृहीता-
मिन्दोः कलामितरदन्तपदे निवेश्य।
प्रेम्णा प्रसादयति पुत्रमुमैकदन्तम्
स त्रायतां गजमुखः स च तौ शिवौ च।

—श्रीरङ्गम् पत्राभिलेखे मुम्मडिनायकस्य

327. यो धूर्जटिजटाजूटमुकुटादपरं विधोः।
धत्तेर्द्धन्दन्तमिषतः स वः पायाद् गजाननः।।

कर्णबेलप्रस्तराभिलेखे जयसिंहदेवस्य

328. यो नित्यं विश्वलक्ष्मीं प्रथयति विधिवद्देवदैत्येन्द्रवन्द्यः
सद्यः पुष्णाति सिद्धिं हरिरिव जनतापालनायेप्सितां यः।
यो वा व्यालेशशाली हर इव नितरां विश्वविघ्नानि निघ्नन्
निर्विघ्नं विघ्नराजः स भवतु भवतामिष्टसिद्ध्यै गजास्यः।।

—लाडनू—अभिलेखे साधारणस्य

329. रदाग्रसञ्चूर्णितरत्नसानुरजोभरैरङ्कजुषो रमण्याः।
सीमन्तसीमान्तरमादधानस्सिन्दूरितं दीव्यति सिन्धुरेन्द्रः।।

—रुक्मिणीकल्याणे श्रीराजचूडामणेः

330. लम्बोदरं विघ्नविघातदक्षं त्र्यक्षं समक्षं सकलश्रुतीनाम्।
मत्तालिपिण्डैः परिपूर्णगण्डं श्रीवक्रतुण्डं विभुमानतोऽस्मि।।

—मुण्डकल्पलतायां दुण्ढिराजसूनुपुरुषोत्तमस्य

331. लम्बोदरं विघ्नविनाशाय गजाननं नौमि परावरेशम्।
यः कर्मकाले स्मरणेन सद्यः कार्यस्य सिद्धिं विदधाति पुंसाम्।।

—भास्कराचार्यकृतसिद्धान्तशिरोमणिभाष्ये
वासनाख्यायां नृसिंहदैवज्ञस्य

332. लीलोदस्ताग्रहस्तान्तरतलवलितं स्वच्छनक्षत्रमुक्ता-
गुच्छा स्वच्छन्दमम्भष्कणगणमिषतो विक्षिपन् दिक्षुमङ्क्षु।
भुक्तैः सौरस्ययुक्तैः प्रचुरघृतसितालड्डुकैर्भक्तदत्तैः
प्राप्तो लम्बोदरत्वं करिवरवदनो मेऽवलम्बोऽस्तु नित्यम्।।

—लक्ष्मीगुणमणिमालायां कृष्णदत्तस्य

333. वन्दे करीन्द्राननमिन्दुमौलिं
वृन्दारकेन्द्रैरभिवन्द्यमानम्।
विघ्नाटवीदारणदारुणैक-
दन्तं जगन्मङ्गलकुम्भिकुम्भम्।।

—चित्रचम्प्वां बाणेश्वरभट्टाचार्यस्य

334. वन्दे किशोरं पार्वत्या अङ्कस्थं गजाननम्।
स्तन्यपानरतं कल्पद्रुमस्याधोविनायकम्।।

—गोलदीपिकायां परमेश्वरस्य

335. वन्दे गजेन्द्रवदनं वामाङ्कारुढवल्लभाश्लिष्टम्।
कुङ्कुमपरागशोणं कुवलयिनीजारकोरकापीडम्।।

—श्रीललितास्तवरत्ने दुर्वाससः

336. वन्दे गजेन्द्रवदनं शिवयोर्हृदन्तरुद्यत्प्रमोदनिकरायितदेहभाजम्।
वेदान्तवेद्यमखिलामरराजरत्नकोटीरकोटिमणिरञ्जितपादद्मम्।।

—कुमारविजयचम्प्वां भास्करयज्वानस्य

337. वन्दे वन्दारुमन्दारमिन्दुभूषणनन्दनम्।
अमन्दानन्दसन्दोहबन्धुरं सिन्धुराननम्।।

—सुभा०सुधा० भा०

338. वन्दे श्रीगणनायकं सुरगुरुं सर्वार्थसिद्धिप्रदम्।
भक्तानां सुखदायकं गजमुखं सिन्दूरशोभाकरम्।।

—संस्कारगणपत्यां

339. वन्दे सिन्दूरकान्तिं मदयुतकरटप्रान्तसम्भ्रान्तभृङ्ग-
ध्वानैरापूरिताशामुखमचलसुताह्लादपाथोधिचन्द्रम्।
शुण्डादण्डे समुद्रान् सुमणिगणयुतान् लीलयापूर्य लोके
दिव्ये भौमे किरन्तं गजवरवदनं शोणशैलेन्द्रसूनुम्।।

—महागणपतिस्तोत्रपञ्चके

340. वन्दे सिन्दूरसन्दोहसुन्दरारुणरोचिषम्।
स्तम्बेरमाननं देवमिन्द्रादिसुरविन्दतम्।।

—ईशानशिवगुरुदेवपद्धतौ ईशानशिवगुरुदेवमिश्रस्य

341. वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यन्नत्वा कृतकृत्यास्युस्तं नमामि गजाननम्।।

—प्रायश्चित्तनिर्णये हेमाद्रेः

342. वाग्वल्लीपल्लवोल्लोलसरागकरभासुरम्।
गजास्यं सुन्दरं वन्दे वृन्दारकगणार्च्चितम्।।

—मल्लारिमाहात्म्ये

343. वामाङ्कारूढवामाक्षीवक्षोजासक्तपुष्करम्।
वारणं विघ्नतमसां वारणास्यमुपास्महे।।

—काञ्चीपुरम् अभिलेखे अच्युतरायस्य

344. विघ्नौघसन्तमससंहरणाय शक्तं
मुक्तं कलङ्ककलया शकलं सुधांशोः।

कुन्दवदाततरदन्तमिषाद्दधानः
श्रेयः परन्दिशतु वः सदयं द्विपास्यः।।

—भेड़ाघाट—अभिलेखे अल्हणदेव्याः

345. विघ्नं निघ्नन् द्विरदवदनः प्रीतये वोऽस्तु नित्यं
वामे कूटः प्रकटितवृहद्दक्षिणस्थूलदन्तः।
यः श्रीकण्ठं पितरममुयाश्लिष्टवामार्द्धदेहं
दृष्ट्वा नूनं स्वयमपि दधावर्द्धनारीश्वरत्वम्।।

—अमरेश्वरमन्दिराभिलेखे

346. वितरतु भगवानसौ श्रियं वः
करिवदनो हरि नीलभासि यस्य।
द्युतिवर सरसिस्फुरत्तरङ्गश्रिय-
मधिकामलिपङ्क्तयो वहन्ति।।

—मल्कापुरप्रस्तरस्तम्भाभिलेखे काकतीयरुद्रदेवस्य

347. विप्राधिपारिरिपुसूनुविरोधितातो
मित्रात्मजारिजनकारिसुताङ्कसंस्थः।
पार्थाग्रजाग्रजनकाशनशत्रुपत्र-
ज्येष्ठो ददातु कुचुमध्यमुखः शुभं वः।।

—वाग्भूषणे

348. विश्वोत्पत्तिविनाशसंस्थितिविधौ यस्य प्रसादं मुहुः
काङ्क्षन्ते कमलासनाद्रितनयानाथब्धिजावल्लभाः।
नित्यं मत्पदपङ्कजे प्रणमतामिष्टार्थ सिद्धिर्नृणाम्
तद्विघ्नौघविघातदक्षचरितं वन्दे गजास्यं महः।।

—भास्कराचार्यकृतलीलावतीव्याख्यायां
क्रियाक्रमकारीसमाख्यायां शङ्करनारायणस्य

349. शक्रादिक्रतुभुक्किरीटमणिमाभास्वत्पदाम्भोरुहम्
भास्वच्चेलधरं सदादरमहं लम्बोदरं सादरम्।
पूर्वं सर्वजनस्य पूज्यमनघं भक्तेष्टकामप्रदम्
वन्दे सिन्धुरवक्त्रमद्रितनुजापुत्रं पवित्राकृतिम्।।

—रामायणतारावल्याम्

350. शम्भोर्जटाजूटनिवासगङ्गाजलं समादाय कराम्बुजेन।
लीलाभिरादात्छिवमर्चयन्तं गजाननं तं शरणं प्रपद्ये।

—लक्ष्मीनारायणार्चापारिजाते भवानीशङ्करस्य

351. शम्भोर्हारफणारत्नैः कर्त्तुं हारं समुत्सुकः।
तानि स्पृशन् पितुर्वक्त्रं पश्यन् पातु गजाननः।।

—वनपल्लिपत्राभिलेखे अण्णववेमस्य

352. शुण्डादण्डमिलन्मिलिन्दपटलीसङ्गीतझङ्कारकम्।
श्रृण्वन् मीलितलोचनो गजमुखो मां पातु सर्वापदः।।

—वाक्यपदीयपाठभेदनिर्णये तृतीये काण्डे

353. शुण्डादण्डलसद्गाढसिन्दूरारुणिताष्टदिक्।
दहन्निवाऽखिलान् विघ्नान् स वः पायाद् गजाननः।।

—गणेशसम्भवे वैद्यनाथशर्मणः

354. शुण्डादण्डाग्रविक्षिप्तपारावारोदवारिभिः।
अकालजलदाशङ्कां कुर्वन् जीयाद्गजाननः।।

—वैद्यकल्पतरौ वैजनाथस्य

355. शुण्डामण्डलसम्प्रसारकरणैर्मौलिस्थलांदोलनै-
र्नेत्रोन्मीलनमीलनैरविरल- श्रीकर्णतालक्रमैः।

दानालिध्वनिभिर्विलासचरितैरुध्वनिनोद्गर्जितैः
जातानन्दभरः करीन्द्रवदनो वः श्रेयसे कल्प्यताम्।।

—जातकाभरणे दुण्ढिराजदैवज्ञस्य

356. शुभ्रांशुमण्डले शुभ्रं भावयामि गजाननम्।
यत्कुण्डलितशुण्डाभ्रनीलिमालाञ्छनच्छविः।।

—चन्द्रलक्ष्म्योत्प्रेक्षाशतके नरहरेः

357. श्रियमवतु गजास्यः श्रेयसां वो गुणानां
स भुवनजननादौ रम्यहर्म्यं सुराणाम्।
अजविनुतमहिम्नः कन्दुको यस्य नाभी-
कुहरविहरदम्भः कुम्भिनीशाटिकाभूत्।।

—पञ्चधरलस्तम्भाभिलेखे कोणराजछोणस्य

358. श्रीमङ्गलास्पदसदाश्रयनीलकण्ठ-
प्रेमप्रकर्षनिलयः सकलाभिवन्द्यः।
श्रीमद्गिरीन्द्रतनयातनयोऽङ्घ्रिभाजाम्
कामप्रदो जयति मत्तमतङ्गजास्यः।।

—मनुष्यालयचन्द्रिकायाम्

359.. श्रीमत्सिन्दूरपूरारुणतनुरतनुद्योतविद्योतिताशो
दानाम्भः पानलुब्धाः मधुकरपटलीर्गण्डयोरादधानः।
बन्दीकृत्यान्धकारान्निवसमुपगतो मण्डलश्चण्डरश्मेः
प्रत्यूहव्यूहमुच्चैरपनयतु ममाह्लाय वेतण्डतुण्डः।।

—वृत्तमाणिक्यमालायां त्रिमल्लभट्टस्य

360. श्रीमद्वक्त्रचतुष्टयाच्युतहरस्वर्णायकाद्यैः सुरैः
कार्यारम्भविधौ समर्चितपदद्वन्द्वं द्विपेन्द्राननम्।

पाशाद्यायुधलड्डुकप्रविलसद्धस्तैश्चतुर्भिर्युत -
श्रीमद्विक्रमसूर्यपालनपरं वन्दे भवानीसुतम्।।

—उत्तरकालामृते कविकालिदासस्य

361. श्रीमानाद्यः सिन्धुरो बन्धुरं वः
श्रेयः पारम्पर्यमाविष्करोतु।
यः प्रत्यूहानोकहव्यूहभङ्गैः
शुण्डादण्डव्यापृतिं व्याकरोति।।

—अद्भुतपञ्जरे नारायणवीक्षितस्य

362. श्रीमानिभास्यो दिशतु श्रियं ते देवः स भानोरिव यस्य लोकः।
पदार्थतत्त्वार्थसुबोधलक्ष्मीं करावलम्बास्ततमां विधत्ते।।

—रामचन्द्रविजये वेंकटकृष्णस्य

363. श्री शार्ङ्गिधातृगिरिशादिकमौलिकोटि-
संघट्टिताङ्घ्रिकमलं विमलाङ्कान्तिम्।
विघ्नौघवृन्ददलनं स्मरणान्नराणाम्
वन्दे गजाननमुमाप्रियसूनुमेकम्।।

—जिल्लाजदीपिकायां नृसिंहवैवज्ञस्य

364. श्रीसंवृद्धिं चिरमुरुतरां श्रेयसां स प्रतन्याच्-
चालुक्यानां कुलदिनरवेर्विश्वनाथस्य राज्ञः।
मात्रादर्शं जनकशिरसश्चन्द्रखण्डेन युञ्जन्
यस्तद्बिम्बं विदधदिव सम्पूर्णमास्ते गजास्यः।।

—पञ्चधरलाभिलेखे चालुक्यराजविश्वेश्वरस्य

365. सकलकलुषहारिचारुचञ्चत्परमपवित्रचरित्रचित्रितश्रीः।
नतविबुधनुतस्सतामुपास्यस्स दिशतु मे मतिमुज्ज्वलान्द्विपास्यः।।

—लक्ष्मीनारायणकाव्ये देवीप्रसादशर्मणः

366. सचन्द्रलेखं गगनं निरीक्ष्य
मुहुर्मुमोदाम्वुदमेचकं यः।
खेलन् पितृप्रान्तचरो गजास्य-
स्सोऽव्यादजाद्यैरभिवन्द्यमानः।।

—रघुदेवपुरपत्राभिलेखे रघुदेवस्य

367. स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम्।
वासरमणिरिव तमसां राशिं नाशयति विघ्नानाम्।।

—जन्मपत्रलेखक्रमे विश्वनाथस्य दिवाकरसूनोः

368. सदादानस्रावस्नपितविलसद्गण्डयुगलम्
लुलल्लोलव्यालाभरणमणिमालाविलसितम्।
प्रचण्डैर्दोदण्डैर्वरकमलपाशाङ्कुशधरै-
र्लसन्तं श्रीमन्तं गजमुखमनन्तं परिणुमः।।

—गणेशलहर्य्याम्

369. सदानन्दाकारं सकलसुखकर्त्तारममलं
महोदारं तारं विबुधपरिवारं सुरवरम्।
कृपापारावारं श्रुतिनुतविहारं सुमनसाम्
मनोहर्त्तारं त्वां गजवदनमात्मन्परिणुमः।।

—गणेशलहर्य्याम्

370. स नः करोतु विघ्नानां वारणं वारणाननः।
मदराजिभिरारब्ध-भोगावलिरिवालिभिः।।

—राघवपाण्डवीये कविराजपण्डितस्य

371. समस्तविघ्नविच्छेदकारणं वारणाननम्।
भजेत्सज्जनसन्तापवारणं तोरणध्वजम्।।

—देवाङ्गदचरित्रे

372. समस्तायुधसम्पूर्णषड्भुजद्वादशान्वितम्।
अधस्ताद्वनिताकारमाद्यं वन्दे गजाननम्।।

—कुमारसंहितायाम्

373. सर्वविघ्नशमनं सुरार्चितं
पूर्वमेव शिवयोस्तनूद्भवम्।
भक्तिमुक्तिपरमार्थसिद्धिदं
तं नमामि वरदं गणाधिपम्।।

—हर्षप्रस्तराभिलेखे

374. सिद्धार्थामरसुन्दरीकरवलत्सिन्दूरधारारुण-
श्रीगण्डस्थलमण्डलीयुगलसद्दानाम्बुपूरोज्वलः।
सन्ध्याभ्रच्छुरिताग्रसानुनिपतन्नाकापगौधद्वय-
स्वर्णोर्वीभृदिव प्रयच्छतु शिवं देवो गजास्योव्ययम्।।

—चित्तौड़गढाभिलेखे मेवाडमोकलस्य

375. सिद्धिः कार्यस्य निर्विघ्ना यदधीना विधेरपि।
तदस्तु हस्तिवदनं वस्तु निःश्रेयसाय नः।।

—स्वरसिद्धान्तचन्द्रिकायाम्

376. सिन्दूरपूरकुम्भस्थलरविविध्वस्तविघ्नघनतिमिरम्।
गगननिभं गजवदनं नमामि सर्वार्थसिद्धये शुद्धम्।।

—कौशल्यकुसुमावल्यां राजाब्रह्मवर्धनस्य

377. सिन्दूरारुणगण्डमण्डलगलद्दानाम्बुधारामिलन्
मत्तेन्दिन्दिरसुन्दरारुणरुचिप्राप्तप्रमोदोदयः।
आरक्तैः किमु जङ्गमैर्विरचितां पुष्पैः शुभामर्हणाम्
मन्वानो विदधातु मङ्गलमहो देवो गजेन्द्राननः।।

—गङ्गावतरणचम्प्वां षष्ठोच्छ्वासे शङ्करस्य

378. सिन्दूरारुणगण्डमण्डलगलद्दानाम्भसां धारया
सिञ्चन्तं पदसक्तभक्तजनताविघ्नौघधूलीरिव।
धम्मिल्लालिमिवालिवृन्दमनिशं मूर्द्धा दधानं हर-
प्रेयांसं गिरिजाङ्गजं गजमुखं वन्देऽरविन्देक्षणम्।।

—वीरमित्रोदये परिभाषाप्रकाशे मित्रमिश्रस्य

379. स्वं स्वं मनोरथमवाप्तुमपेतविघ्नम्
यस्य प्रसादमनवाप्य न शक्नुवन्ति।
पद्मासनप्रभृतयः प्रथमेऽपि दिवास्तद्वस्तु
हस्तिमुखमस्तु मयि प्रसन्नम्।।

—काशिकायाः व्याख्यायां पदमञ्जरी—
समाख्यायां हरदत्तमिश्रस्य

380. हिमाद्रिजासुतं भजे गणेशमीशनन्दनम्
एकदन्तवक्रतुण्डनागयज्ञसूत्रकम्।
रक्तगात्र पद्मनेत्र शुक्लवस्त्रमण्डनम्
कल्पवृक्ष-भक्तरक्ष-नमोऽस्तु ते गजाननम्।।

—गणेशपञ्चरत्नस्तोत्रे

## लम्बोदरः

381. अङ्कारोहणवाञ्छया गिरिभुवो यान्तं प्रति स्वं हठात्
भ्रान्त्या वन्यमतङ्गजस्य कुपितं तद्वाहकण्ठीरवम्।
दृष्ट्वा चीत्कृतिगर्जितैस्त्रिजगतीमुद्वेपयन्सस्मितम्
देव्याङ्के कलितः सुरासुरनुतो लम्बोदरः पातु वः।।

—चित्रचम्प्वां बाणेश्वरभट्टाचार्यस्य

382. अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम्।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः।।

—कालिदासकृत—रघुवंशव्याख्यायां
सञ्जीवनीसमाख्यायां मल्लिनाथस्य

383. अन्तस्थानामशेषाणां भुवनानां भरादिव।
यस्योदरमभूल्लम्बं प्रत्यूहेशः स पातु वः।।
—अन्नवप्पदुपत्राभिलेखे काट्यवेमारेड्डिमहोदयस्य

384. अविरलविगलितमदजलविलुलितमत्तालिमाल्यमनुलम्बः।
सुविपुलकपोलफलको दलयतु लम्बोदरो दुरितम्।
—चित्सुखाचार्यकृत—तत्त्वप्रदीपिकायाष्टीकायां
नयनप्रसादिनीसमाख्यायां प्रत्यक्स्वरूपभगवतः

385. आलम्बे जगदालम्बं लम्बोदरपदाम्बुजम्।
शुष्यन्ति यद्रजस्स्पर्शात्सद्यः प्रत्यूहवार्धयः।।
—भैष्मीपरिणयचम्प्वां रत्नखेटश्रीनिवासमखः

386. इच्छासिध्यै हिमगिरिसुतानन्दथोरालवालं
देवं लम्बोदरकरिपतिं वन्दनैर्नन्दयामः।
यस्य क्रीडापरिणतिभुवो मेरुशृङ्गस्फुलिङ्गा-
स्संदृश्यन्ते दुरिततिमिरोत्सारणाकार्यसूर्याः।।
—मोटुपल्लिस्तम्भाभिलेखे गणपतिदेवस्य

387. कपोलालम्बिरोलम्बबिम्बकोलाहलाकुलम्।
अम्बालम्बानुरागान्धं लम्बे लम्बोदराननम्।।
—अलङ्कारमञ्जर्यां त्रिमल्लभट्टस्य

388. गण्डस्थकुण्डलबलद्विवरे भुशुण्डो
मुण्डोद्धृतात्यरुणबिन्दुमदिन्दुखण्डः।
गौरी पदाङ्गुलिषु बिम्वधियातिलम्बो
लम्बोदरो विजयते जयते यथोग्रः।।
—वायुप्रबोधिन्यां केदारनाथमैथिलस्य

389. गण्डाभोगविलोलषट्पदघटासंवारणव्याजतः
शुण्डादण्डविघट्टनेन परितो विघ्नं विनिघ्नन्निव।
निर्गच्छन्मदवारिपिच्छिलतले धून्वन् मुहुः प्रस्खल-
न्नारम्भो मम जायतामिह करालम्बाय लम्बोदरः।।

—किरणावलीप्रकाशविवरणे रुचिदत्तस्य

390. गम्भीराम्भोधिभङ्गोत्तरलतरतरीतुल्यभूचक्रबालम्
व्यग्रव्यालेन्द्रमिन्द्रे दधति पलभुजामद्रिमुद्धर्त्तुमौग्रम्।
निद्राभङ्गादपाङ्गावलदलसमटद्भ्रूपुटीभ्रकुटीभाक्
शं वो लम्बोदरोऽव्यात्प्रलयघनघटाटोपनाटीरवेण।।

—आनन्दकन्दचम्प्वां मित्रमिश्रस्य

391. गर्जद्गभीरघनघर्घरघोरघोष-
दिग्दन्तिभीतिजननोद्गतकण्ठनादः।
धुन्वन् मुखं तव निरस्यतु सर्वविघ्नम्
लम्बोदरः सहजनाट्यरसप्रवृत्तः।।

—सदुक्ति० पापाकस्य

392. गौरीशङ्करवल्लभो गणपतिर्लक्ष्मीलतावारिदो-
विघ्नाव्यूहविनाशनैकनिपुणः श्रेयस्करस्सौख्यदः।
इच्छापूर्णककामधेनुललनः सन्तानवृद्धिप्रदो
नित्यं मूषकवाहनो भवभृतां लम्बोदरः श्रेयसे।।

—गौजीजातके

393. चूडाचुम्बितकैरवप्रणयिनो लम्बोदरस्य प्रभोः
गण्डाभोगतरङ्गितो वितरतु श्रेयांसि दानद्रवः।
स्तोकान्दोलितकर्णतालयुगलव्यापारदूरीकृता-
प्यन्वेति स्वयमेव यं रसवशादभ्येत्य भृङ्गावलिः।।

—सुभद्रापरिणये नल्लाकवेः

394. तुहिनगिरितनूजास्तन्यसञ्जाततुष्टे-
र्मिलदलिमदलेखालम्बिलम्बोदरस्य।
कलयतु कमनीयाकारमोङ्कारमूर्त्ते-
र्वपुरलमनुवेलं तुन्दिलं मङ्गलं वः।।

—सौरिसुरतरङ्गिण्यां सदाशिवसूनुगणेशकवेः

395. दारितदुरितकदम्बो रोलम्बोल्लसितमौलिना ललितः।
कल्याणं सुचिरं वो रुचिरं लम्बोदरः कुरुताम्।।

—अलङ्कारमञ्जर्यां वेणीदत्तस्य

396. नमामि विघ्नेश पदाम्बुजं ते स्मरामि लम्बोदर दिव्यनाम।
करोमि पूजां तव मूर्धदेशे ग्रन्थस्य पूर्तिं कुरु विघ्नराज।।

—अह्निकभास्करे इन्द्रकण्टियज्ञनारायणस्य

397. पायाद्वः परिवर्त्तमानलहरीप्राग्भारमास्फालयन्
सायंकालतरङ्गकेलिषु करास्कन्देन मन्दाकिनीम्।
देवस्यारभटीपरिभ्रमकलासंरम्भसम्भाविनः
शम्भोराद्यमृदङ्गवाद्यरचनारम्भाय लम्बोदरः।।

—चेब्रोलु—अभिलेखे जयस्य

398. पुरन्दरदलन्नेत्ररत्ननीराजनीकृतम्।
वन्दे लम्बोदरोदारपदद्वन्द्वसरोरुहम्।।

—सर्वदेवकृत—प्रमाणमञ्जरीव्याख्यायां
भावदीपिकाख्यायां वामनभट्टस्य

399. बिभ्रद्दक्षिणहस्तपद्मयुगले दन्ताक्षसूत्रे शुभे
वामे मोदकपूर्णपात्रपरशुं नागोपवीती त्रिदृक्।
श्रीमान् सिंहयुगासनः श्रुति युगे शङ्खे वहन् मौलिमान्
दिश्यादीश्वरपुत्र एष भगवान् लम्बोदरः शर्म नः।।

—गणेश्वरस्तोत्रे

400. मदमुदितभृङ्गभांकृतिहुंकृतिभिस्तर्जयन्विघ्नान्।
कृपया कृतावलम्बः शं वो लम्बोदरो ममादिश्यात्।।
—सिद्धान्तरत्नमालायां श्रीवत्सलाञ्छनशर्मणः

401. मिलिन्दमण्डलीमण्डिगण्डमण्डलमण्डितम्।
वितण्डतुण्डभवतादतर्क्यं तुन्दिलं महः।।
—गङ्गावतरणचम्प्वां बालकृष्णसूनुशङ्करस्य

402. यदा लम्बोदरं हन्ति सतां प्रत्यूहसम्भवम्।
तदालम्बे यदालम्बं लम्बोदरपदाम्बुजम्।।
—वेदान्तसिद्धान्तसारसङ्ग्रहे सदानन्दसरस्वत्याः

403. यद्गण्डमण्डलतटीप्रकटालिमाला-
वर्णावलीव खदले खलु मङ्गलस्य।
लम्बोदरः स जगतां यशसां प्रसार-
मानन्दतां द्युमणिना सह यावदिन्दुः।।
—असमपत्राभिलेखे वल्लभदेवस्य

404. योगेश! क्व गतं चिरं हिमगिरेः श्रृङ्गे कुटीरे प्रिये
योगार्थं किमुतास्ति कापि रमणी तत्रेति सम्भाषणम्।
श्रुत्वा हाससमन्वितं गिरिसुतागौरीशयोर्मेनका
तत्रास्तीति वदन् सलज्जहृदयो माम्पातु लम्बोदरः।।
—जगदीशतर्कालङ्कारकृत—शब्दशक्तिप्रकाशिकायाष्टीकायां
कृष्णकान्तीसमाख्यायां कृष्णकान्तस्य

405. लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा।।
—प्रिन्स आफ वेल्स इति नाम्नि
सङ्ग्रहालयस्थ —अभिलेख सोमेश्वरदेवस्य

406. लम्बोदरमवलम्बे सुरनिकुरम्बावलम्बितं नित्यं।
प्रभवति यस्य स्मरणं विघ्नव्यूहव्यपोहाय।।

—सिद्धान्तसञ्चये

407. लम्बोदरःप्रथयतादतुलां मुदं यो
वालोनुबिम्बिततनुं शशिनं जिघृक्षुः।
लब्धो मयामृतमयः खलु मोदकोऽय-
मित्थं ननर्त्त गिरिजाङ्गणरङ्गभूमौ।।

—कुम्भलगढ— अभिलेखे

408. वंशप्रांशुमहांसविंशतिभुजस्तम्भालिरम्भायित-
व्यालोलीकृतशम्भुभूभृति दशग्रीवे सुरा दुद्रुवः।
उद्बुद्धालसलेशनद्धनयनः सान्दोलहिन्दोलिका-
क्रीडालीढमना दिशन्नधिमनः शं वोऽस्तु लम्बोदरः।।

—आनन्दकन्दचम्प्वां मित्रमिश्रस्य

409. शङ्करजगदम्बिकयोरङ्के पङ्केन खेलन्तम्।
लम्बोदरमवलम्बे यं वेद न तत्त्वतो वेदः।।

—गङ्गेशोपाध्यायकृततत्त्वचिन्तमणेष्टीकायां
दर्पणाख्यायां महेशठाकुरस्य

410. शं वो लम्बोदरो देयादेककालं कलत्रयोः।
बुद्धिसिद्ध्योः स्तनस्पर्शहेतोरिव चतुर्भुजः।।

—रणथम्भोरहम्मीरकालाभिलेखे

411. समालम्बे लम्बोदरचरणपङ्केरुहयुगम्
यदालम्ब्य स्वैरं विजहति च विघ्नान्धतमसम्।

स्मरन्तः सन्तो यं निरुपाधिपरानन्दलहरी
समाक्रान्तस्वान्ता हरिहरविरिञ्चिप्रभृतयः।।

—श्राद्धकल्पलतायाम्

412. सर्वाणि शास्त्राणि समाकलय्य न्यस्तानि येनोदर एव यस्मात्।
लम्बोदरत्वे प्रथिताभिधानं तं धीनिधानं गणनाथमीडे।।

—जयदेवकृतचन्द्रालोकस्य व्याख्यायां
पौर्णमासीसमाख्यायां नन्दकिशोरशर्मणः

413. सिन्दूरपूरारुणवारणास्यो दास्योद्यतानां सकलार्थदाता।
विध्नाब्धिमज्जज्जनतावलम्बे लम्बोदरो मे हृदये सदाऽस्तु।।

—राघवोल्लासे अद्वैतयतेः

414. स्मृतिफलितसमस्ताभीष्टमुद्याद्दिनेश-
प्रतिभटनिजशोभाशान्तविघ्नान्धकारम्।
कंमपि शिवभवान्योरङ्कसौभाग्यमन्तः-
सुरमणिमवलम्बे चारु लम्बोदराख्यम्।।

—वाल्मीकिकृतयोगवासिष्ठव्याख्यायां तात्पर्यप्रकाशाख्यायां
आनन्दबोधेन्द्रसरस्वत्याः

415. हेमाद्रिं किल मातुलुङ्गफलमित्यादाय मोदाधिको
मौग्ध्यान्नागनिवासिनां भयपरैः सार्थैरिव प्रार्थितः।
नीलीशम्बरनीलमम्बरतलं जम्बूफलं भावय-
न्तन्मुञ्चन् गिरिमम्बरं परिमृशन् लम्बोदरः पातु नः।

—सुभा० सुधा०

# विनायकः

416. अनाद्यन्तोऽपराधीनः स्वधीनभुवनत्रयः।
जयत्यविरतो व्याप्तविश्वः कालो विनायकः।।

—तन्त्रराजे

417. अन्तरायकरिकेसरीभवन् यो गजानन इति प्रथमगात्।
तं विचित्रचरितं विनायकं नायकं सकलसम्पदां भजे।।

—शिवभक्तविलासस्य टीकायां प्रकाशिकाख्यायां नृसिंहस्य

418. एकदन्तमीशपुत्रमाखुवाहमैश्वरम्
तत्त्वराजदन्तसूर्यमन्तरायभेदनम्।
अच्युताद्यशेषदेवपूजिताङ्घ्रिपङ्कजम्
विघ्नशैलवज्रिणं विनायकं नमाम्यहम्।।

—विनायकाष्टके

419. एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम्।
पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिविनायकम्।।

—गणपतिप्रतिष्ठायाम्

420. निशुम्भभरनम्रोवीरवर्विताः पर्वता अपि।
यं नमन्तीव नृत्यन्तं नमामस्तं विनायकम्।।

—कथासरित्सागरे नवमे लम्बके सोमदेवभट्टस्य

421. नीलोद्भवप्रियविवर्द्धितभानुभालम्
सर्वस्वभक्तिजनविघ्नसमूहकालम्।
विश्वम्भराधरपतेर्दुहितुः सुबालम्
वन्दे विनायकमहं गुफितेन्द्रजालम्।।

—भैरवप्रश्ने भैरवस्य

422. मदजलमण्डितगात्रो मधुकरमालापरिष्कृतो नित्यम्।
पन्नगभूषणशाली सोन्नतनृत्तो विनायकः पायात्।।

—बालरामभरते बालरामवर्मणः

423. मूषकवाहन मोदकहस्त चामरकर्ण विलम्बितसूत्र।
वामनरूप महेश्वरपुत्र विघ्नविनायकपाद नमस्ते।।

—गणनायकाष्टके

424. यदीयपादसारसं महेशधातृकेशव-
प्रमोदहेतुवन्दनं गिरीन्द्रनन्दिनीसुतम्।
सुसिद्धिबुद्धिसाधनं दुरन्तविघ्नबाधनम्
सुसिद्धिबुद्धिनायकं विनायकं भजामि तम्।।

—श्रीगङ्गाष्टके

425. यस्मादर्थचतुष्टयं त्रिजगतामव्याहतं वर्त्तते
पित्रोराद्यकुटुम्बिनोः सदयितालोक्या च या सन्ततिः।
युद्धे त्रैपुर एव यस्य विहितं स्वातन्त्र्यमव्याहतम्
श्रीमङ्कोङ्कविनायकः स दिशताद् दिव्यान्यभीष्टानि नः।।

—संक्षेपशारीरकस्य व्याख्यायां सिद्धान्तदीपे विश्वदेवस्य

426. लीलावति लताकल्पे कल्पनालि सुसङ्गमे।
करोतु विघ्नं विघ्नानां विघ्नानां नायकस्तव।

—चमत्कारचिन्तामणौ लोलिम्बराजस्य

427. विनायकं सुकण्ठकं विधीशविष्णुविष्टुतम्
विनाशितामितासुरं विषाणपाशपाणिकम्।
विपांस्विभास्यभालकं विभाकरं परं सुरम्
विशालदण्डदन्तिनं विभुं भजे यजे सदा।।

—संस्काररत्नमालायां गोपीनाथदीक्षितस्य

428. सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः।।

—मालतीमाधवे भवभूतेः

429. सुवर्णगिरिकर्णिके तरलतारकाकेसरे
चलज्जलदषट्पदे स्फुटदिगन्तपत्राष्टके।
स वः प्रथमनायकः प्रदिशतु श्रियं यत्करः
करोति जगदम्बुजे वलितनाललीलायितम्।।

—सूक्तिमु० क्षेमेन्द्रस्य

## हेरम्बः

430. अपारविद्योदधिपारसेतुं नेतुं सुरेन्द्रादि शुभैकहेतुम्।
पारं वहन्ते धिषणाभिलाषं हेरम्बसेवां समुपाश्रयन्तु।।

—नलोदयस्य टीकायां यमकबोधनीसमाख्यायां श्रीरामस्य

431. अवारणीयं रिपुभिर्वारणीयं करं नुमः।
हेरम्बस्य ससिन्दूरमसिं दूरमघच्छिदम्।।

—कथासरित्सागरे दशमे लम्बके सोमवेवभट्टस्य

432. आनन्दमात्रमकरन्दमनन्तगन्धम्
योगीन्द्रसुस्थिरमिलिन्दमपास्तबन्धम्।
वेदान्तसूर्यकिरणैकविकासशीलम्
हेरम्बपादशरदम्बुजमानतोऽस्मि।।

—सुभा०सुधा०भा०

433. आलम्बे जगदालम्बे हेरम्बचरणाम्बुजे।
शुष्यन्ति यद्रजः स्पर्शात्सद्यः प्रत्यूहवार्द्धयः।।
—किरातार्जुनीयस्य टीकायां घण्टापथसमाख्यायां मल्लिनाथस्य

434. ऐश्वर्यमव्याहतमावहन्तु
हेरम्बपादाम्बुजपांसवो नः।
ये निर्वहन्ति श्रुतिसुन्दरीणां
सीमन्तसिन्दूरपरागलक्ष्मीम्।।
—सुभा०सुधा०

435. कदम्बप्रसूनी सुकादम्बवाक्यो
मदाडम्बरो दूरितद्विट्कदम्बः।
कृतालम्बरोलम्बगल्लो निहन्यान्
महासंकटं नः स हेरम्बदेवः।।
—अमरकाव्ये रणछोणभट्टस्य

436. कपोलादुड्डीनैर्भयवशविलोलैर्मधुकरै-
र्मदाम्भः संलोभादुपरि पतितुं बद्धपटलैः।
चलद्वर्हच्छत्रश्रियमिव दधानोऽतिरुचिरा-
मविघ्नं हेरम्बो जगदघविघातं घटयतु।।
—सदुक्ति० वसुकल्पस्य

437. कुम्भीन्द्रोद्भटकुम्भकूटकठिनप्रारम्भसम्भावित-
प्रालेयाचलनन्दिनीस्तनतटे बिम्बात्तनोरात्मनः।
कः स्तन्यं धयति स्तनन्धय इति क्रोधान्धभावोद्धता
हेरम्बस्य गभीरहुङ्कृतिगणा विघ्नान्विनिघ्नन्तु वः।।
—आनन्दकन्दचम्प्वां मित्रमिश्रस्य

438. कुम्भोद्भ्रान्तमधुव्रतावलिवलद्धुङ्कारकोलाहलैः
शुण्डास्फालनविह्वलैः स्तुत इव व्यालैर्वियत्प्लाविभिः।

मज्जत्कुम्भमहावगाहनकृतारम्भो महाम्भोनिधौ
हेरम्बः कुरुतां कृताम्बरकरालम्बश्चिरं वः शिवम्।।
—वीरमित्रोदये शुद्धिप्रकाशे मित्रमिश्रस्य

439. गजवदनमेकरदनं तं सच्चिदनन्तसुखघनापघनम्।
भक्तहृतविघ्नवृन्दं वन्दे हेरम्बमद्वन्द्वम्।।
—गङ्गाधरकृत—अद्भुतरामायणस्य टीकायां सर्वार्थदर्शिनी—
समाख्यायां त्र्यम्बकसूनुशिवसूरिणः

440. चण्डीकुण्डलमाकलय्य कुतुकाद्दण्डाभशुण्डाग्रणं
कृत्वा ताण्डवडम्बरे पशुपतेः खेलन् खलूच्छृङ्खलम्।
चण्डांशोरिव मण्डलं तदपरं सन्दर्शयन्नम्बरे
हेरम्बो जगदम्बिकां विहसयन्वः श्रेयसे गर्जताम्।।
—नीलकण्ठकृत—संज्ञाविवेकस्य टीकायां संज्ञाविवेकोदाहरण—
समाख्यायां —विश्वनाथस्य

441. जम्भारि मौलिमन्दारमालिकामधुचुम्बिनः।
पिबेयुरन्तरायाब्धिं हेरम्बपादपांसवः।।
—कुन्दमालायां दिङ्नागाचार्यस्य

442. तीक्ष्णैस्तिग्मरुचः करैः परिचितां सेक्तुं कपोलस्थलीम्
नीराणां निकरं करेण हरता तुच्छीकृते नीरधौ।
मैनाकं समुवीक्ष्य पङ्कपतितं शालूरशङ्काजुषो
हेरम्बस्य पुनातु दन्तशिखरव्यापारलीलारसः।।
—भानुकरस्य

443. दानस्रोतस्सहस्रैर्दशनरुचिचयैः कुम्भसिन्दूरपूरै-
रुद्भूतैरेककालं प्रकटितं रजनीघस्रसन्ध्याविलासाः।
आस्फालस्फारघण्टाबहलकलकलव्याकुलाहीन्द्रदारा
हेरम्बस्याङ्गहारप्रचलदवनयः पान्तु वो नृत्तलीलाः।।
—सूक्तिमु० विश्वेश्वरस्य

444. देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः।
विघ्नं हरन्तु हेरम्ब चरणाम्बुजरेणवः।।
—दर्शपूर्णमाससरण्यां गोविन्दव्यङ्कटेशस्य

445. देवो जयति हेरम्बः स्वदन्तबिसखेलनैः।
यस्योच्चैस्तत्प्रभा शुभ्रा हसन्तीव दिशो दश।।
—देशोपदेशे क्षेमेन्द्रस्य

446. नानादानविधानयज्ञनिकरैरुग्रैस्तपोभिश्चिरात्
प्राप्ते कल्पतरौ प्रकल्पितफलावाप्तिः कथञ्चिद् भवेत्।
तूर्णं यच्चरणाम्बुजस्मरणतस्सम्पूर्णकामः पुमान्
सोऽयम्बोऽभिमतन्ददातु सततं हेरम्बकल्पद्रुमः।।
—अज्ञातनाम्नि ज्योतिषग्रन्थविशेषे

447. पादन्यासभरातिरेकविनमत्पृथ्वीमिथः सम्मिलत्-
सप्ताम्भोधिपयः प्रवाहकलनावित्रस्तविश्वत्रयाः।
चञ्चत्कौतुककन्दुकीकृतकुलक्षोणीधरश्रेणयोः
हेरम्बस्य जयन्ति दानरभसभ्रान्तालयः केलयः।।
—थनाभिलेखे रामचन्द्रस्य

448. भक्ते सद्मयुतामिवाम्बुधिसुतां निक्षेप्तुमभ्यर्हते
दातुं विघ्नघटाभिघाटनमुरीकृत्येव तत्प्रत्ययम्।
दानाम्भोलहरीभिरार्द्रमुररीकुर्वाणमम्भोरुहं
हेरम्बस्य करं भजे भगवतः क्रीडाजुषो मानसे।।
—आनन्दकन्दचम्प्वां मित्रमिश्रस्य

449. मदघूर्णितवक्त्रोत्थैः सिन्दूरैश्छुरयन्महीम्।
हेरम्बः पातु वो विघ्नान्स्वतेजोभिर्दहन्निव।।
—कथासरित्सागरे पञ्चमेलम्बके सोमदेवभट्टस्य

450. यत्पादाम्भोजरेणुं विबुधकविवराः प्राप्य सिद्धाञ्जनं वा
प्रज्ञादृष्टेः प्रमीलां पटुतरतमसा प्राप्तवत्या निजायाः।
आसाद्योन्मेषमारान्निधिमिव कवितां प्रापुरुद्यद्गुणार्थाम्
निष्प्रत्यूहं मुदास्मान्स सुरवरनुतः पातु हेरम्बदेवः।।

—श्रीभोजराजकृत—चम्पूरामयणस्य टीकायां
साहित्यमञ्जूषाख्यायां रामचन्द्रबुधेन्द्रस्य

451. यस्य श्रीमदपाङ्गवीक्षणशरज्ज्योत्स्नाविधूतान्तरा
विघ्नध्वान्तगणाःप्रयान्ति विलयं यश्श्रेयसामाकरः।
श्रीकामेश्वरसुन्दरीस्मितरुचिक्षीराब्धिजेन्दुं विभुम्
हेरम्बं हिमरश्मिकोटिमकुटं तं नौमि शश्वच्छ्रियै।।

—ललिताविलासचम्वाम्

452. युगपत्स्वगण्डचुम्बनलोलौ पितरौ निरीक्ष्य हेरम्बः।
तन्मुखमेलनकुतुकी स्वाननमपनीय परिहरसन् पायात्।।

—सुभा०. सुधा० भा०

453. रक्षतु कलहेरम्बस्त्रिजगद्वन्द्यः स हेरम्बः।
बहुविधशृङ्गाररचितं यद्वदनं शम्भुना रचितम्।।

—काश्मीरकजगद्धरभट्टकृत—स्तुतिकुसुमाञ्जलेष्टीकायां
लघुपञ्चिकाख्यायां राजानकरत्नकण्ठस्य

454. लक्ष्मीं तनोतु सुतरामितरानपेक्ष-
मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम्।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नम्
विघ्नाद्रिभेदशतधारधुरन्धरं नः।।

—बृहत्स्तोत्ररत्नाकरे

455. वप्राघातनिमग्नदन्तजनितच्छिद्रात् सुमेरोस्तटात्
पत्युः कुण्डलिनां फणामणिमहस्तोमे समुत्तस्थुषि।
रत्नस्तम्भ इति भ्रमेण करटं कण्डूयितुं लक्षिता
हेरम्बस्य जयन्ति कूणितदृशो मूर्ध्नो मुधा धूतयः।।

—सुभा०सुधा०

456. विघ्नौघविध्वंसनसक्तमेनं नमामि कान्तं द्विरदाननं तम्।
हेरम्बमुद्यद्रविकोटिकान्तिं पञ्चाननैरप्यविलङ्घितांसम्।।

—हरिद्रागणपतिकल्पे श्रीनिवासभट्टस्य

457. विश्वतात् जगन्मातरेवं गौरीगिरीशयोः।
मिथः सम्भाषया स्मारं हेरम्बं समुपास्महे।।

—जगदीशतर्कालङ्कारकृत—शब्दशक्तिप्रकाशिकायाष्टीकायां
रामभद्रीसमाख्यायां रामभद्रस्य

458. सर्वकर्मसमारम्भे गीर्वाणैर्यो नमस्कृतः।
स मया पार्वतीपुत्रो हेरम्बः स्तूयतेनिशम्।।

—हर्सौद— अभिलेखे देवपालदेवस्य

459. सानन्दनन्दिहतपुष्करनिर्भराणि
हेरम्बकण्ठहसितानि चिरं जयन्ति।
कुर्वन्ति यानि घनशङ्किकुमारबर्हि-
नृत्यैर्विचित्ररुचिभाञ्जि दिगन्तराणि।।

—वृहत्कथामञ्जर्यां तृतीये लम्बके क्षेमेन्द्रस्य

460. सौवर्णाद्रितटस्थलीपरिणमद्दन्ताग्रविस्फूर्जित-
स्वर्णक्षोणिविकीर्णरेणुपटलीनीरन्ध्रसिन्दूरिता।
गण्डोड्डीनमधुव्रतोरुविरुतस्फारीभवद्बृंहिता
हैरम्बी तनुरस्तु नः शुभकरी शुण्डालदण्डोद्धुरा।।

—आनन्दकल्पलतिकायां महेश्वरतेजानन्दनाथस्य

461. स्वबिम्बमम्बाकुचकुम्भबिम्बे
विलोकमानं प्रतिबिम्बमानम्।
प्रचण्डशुण्डं परितः क्षिपन्तं
हेरम्बमालम्बनमाश्रयामः।।

—रसप्रदीपे प्रभाकरभट्टस्य

462. हेरम्ब क्व किमम्ब किं तवकरे तातस्य चान्द्रीकला-
कृत्यं किं शरजन्मनोक्तमनया दन्तान्तरं स्यादिति।
तातः कुप्यति गृह्यतामिति विहायाहर्तुमन्यां कला-
माकाशे जयति प्रसारितकरस्स्तम्बेरमग्रामणीः।।

—विदग्धमुखमण्डनस्य टीकायां श्रवणभूषण—
समाख्यायां नरहरिभट्टस्य

463. हेरम्बमम्बाकरकुड्मलाग्रसंलालनापह्नुतरोषदोषम्।
षाण्मातुराकृष्टकराग्रचञ्चद्विशालसम्मोदककन्दुकं नुमः।।

—राघवपाण्डवीयस्य टीकायां शशधरस्य

464. हेरम्ब संहर विभो तरसान्तरायवर्गम्
न भर्गतनयात्र तवोपचारः।
यद्विघ्नमूलखननाय विषाणहस्तः
सन्तर्कितोऽसि भगवन् स्वयमुद्यतस्त्वम्।

—सर्वदेवकृतप्रमाणमञ्जर्याष्टीकायां बलभद्रस्य

465. हेरम्बं जगदुदयस्थितिक्षयादि
व्यापारान्विदधतमात्मलीलयैव।
आनन्दं स्वयमवभासमानसत्यम्
भक्तानुग्रहधृतदिव्यदेहमीडे।।

—गणेशविजयकाव्ये गोपालरावमैरालस्य

466. हेरम्बं भुवनस्थशीर्षमधुलिट्संसक्तपादाम्बुजम्
गौरीहृत्कमलप्रकाशतरणिं विघ्नाटवीपावकम्।
दृप्यद्वैरिकुलान्तकं सुमनसां श्रीसिद्धिबुद्धिप्रदम्
सिन्दूरारुणगण्डयुग्ममनिशं भालौषधीशं भजे।।
—संज्ञाविवेकस्य टीकायां माधवस्य

467. हेरम्बः सुरपूजितो गुणमयो लम्बोदरः स्त्रीयुतः
शश्वद्योगजकर्णको गजमुखो गम्भीरविद्यागणः।
गौर्य्याः पुत्र-गणेश्वरो हरसुतो गोवृन्दपूजाकृतो
यात्रा-जन्म-विवाहकर्मसमये कुर्वन्तु नो मङ्गलम्।।
—कालिदासमङ्गलाष्टके कालिदासस्य

## एकदन्तः

468. अगजाननपद्मार्कं गजाननमहर्निशम्।
अनेकदन्तं भक्तानामेकदन्तमुपास्महे।।
—शिवयोगप्रदीपिकायां शिवयोगनाथस्य

469. उपासितव्यमन्तरायशान्तये चिकीर्षता-
प्युपासनं हि देवतान्तरस्य यत्पदाम्बुजम्।
वयं तमेकदन्तमेव चिन्तितप्रदं नृणां
विचिन्तयामहेतरां निरन्तरं हृदन्तरे।।
—स्वरसिद्धान्तचन्द्रिकायाम्

470. उमाप्रेमबालं लसत्सामलोलम्
कनक्रत्नचेलं विलासत्कपोलम्।
जगज्जन्ममूलं जगद्द्वेषिकालम्
नमाम्येकदन्तं नतानेकदं तम्।।
—विनायकभुजङ्गे

471. एकदन्तद्युतिसितः शम्भोः सूनुः श्रियेऽस्तु वः।
विद्याकन्द इवोद्भिन्नवाङ्कुरमनोहरः।।

—शार्ङ्गधरकृत—शार्ङ्गधरपद्धतौ श्रीधनददेवस्य

472. एकः स एव परिपालयताज्जगन्ति
गौरीगिरीशचरितानुकृतिं दधानः।
आभाति यो दशनशून्यमुखैकदेश-
देहार्द्धहारितवधूक इवैकदन्तः।।

—सदुक्ति० वसुकल्पस्य

473. कलयाम्यनेकदन्तं विदन्तमन्तःस्फुटैकदन्तमपि।
विभुजं च चतुर्भुजं यं जगन्ति गायन्ति मोदकैकभुजम्।।

—विद्वद्भूषणे बालकृष्णभट्टस्य

# शिवः

474. अकलितमहिमा यः क्ष्मादिसादाशिवान्तं
कलयति हृदि विश्वं चित्रसंयोजनाभिः।
प्रथयति च विचित्राः सृष्टिसंहारलीलाः
स जयति शिव एकः स्पन्दवान्स्वप्रतिष्ठः।।

—स्पन्दसन्दोहे क्षेमराजस्य

475. अगजाननिहितदृशो गजाननोद्धूतकपिशकेशस्य।
मदनप्लुषो निमेषोदयरहितः कोऽपि विभ्रमो जयति।।

—कालिदासकृतविक्रमोर्वशीयस्य टीकायां
प्रकाशाख्यायां श्रीरामचन्द्रमिश्रस्य

476. अङ्कस्थायाः किमपि वलता हैमवत्याः कुचाग्रे
व्याचक्षाणं मदननिगमान् वामहस्ताम्बुजेन।
अन्येनाऽर्थानकृतकगिरामञ्चता बोधमुद्रा-
मीक्षे साक्षादखिलजगतामीशमाद्यं गुरूणाम्।।

—अद्वैतविद्यातिलके समरपुङ्गवदीक्षितस्य

477. अङ्के यस्य विभूतिर्मौलिसुधांशुस्फुरद्विभानिचया।
सञ्चारिणीव राजति सोऽवतु भगवान् शरण्योः नः।।

—सुभा०सुधा०भा०

478. अङ्गं भुजङ्गरचिताङ्गदभङ्गि तुङ्गं
त्वङ्गत्तरङ्ग गगनाङ्गनसङ्गिगङ्गम्।
बिभ्रद्विभुर्विहितरङ्गदनङ्गभङ्ग-
मङ्गीकरोत्वरमभङ्गुरमिङ्गितं वः।।

—स्तुतिकु०

479. अङ्गं येन रथीकृतं नयनयोर्युग्मं रथाङ्गीकृतं
पात्रं स्वं रथकर्मसारथिकृतं श्वासास्तुरङ्गीकृताः।
कोदण्डीकृतमात्मवीर्यमचिरान्मौर्वीकृतं भूषणं
वामाङ्गं विशिखीकृतं दिशतु नः क्षेमं स धन्वी पुमान्।।

—सुभा० सुधा०भा०

480. अज्ञानौघमहान्धकारपटलध्वंसप्रचण्डद्युति-
र्ब्रह्मानन्दपरम्परैकनिलयः पूर्णेन्दुकोटिप्रभः।
पाणिभ्यामभयं वरञ्च जगतामुच्चैस्तरामादिशन्
मूर्ध्नि श्वेतसरोरुहासनसमासीनः शिवः पातु नः।।

—श्रीतत्त्वचिन्तामणौ पूर्णानन्दस्य

481. अनङ्गीकृतकामाय नमो वामार्द्धधारिणे।
शिवायाश्चर्यरुपाय निष्कलाय कलाभृते।।

—बृहत्कथामञ्जर्यां क्षेमेन्द्रस्य

482. अनन्यभावं भजतां पदाब्जं नास्तीति भूयो जननं जनानाम्।
हस्ताग्निना प्रत्ययमाचरन्तं वन्दे भवानीपतिमिन्दुमौलिम्।।

—रामचन्द्रविजये वेंकटकृष्णस्य

483. अपारसंसारसमुद्रमग्नस्वभक्तजन्तूद्धरणे दयालुः।
धृतैकदीक्षः पुरतस्तनोतु शिवः शिवं मे शिवया समेतः।।

—जटापटलस्य दीपिकाटीकायां धरणीधरसूनोर्दयाशङ्करस्य

484. अभिषेकजलापूर्णे चित्ररत्नाम्बुजाकरे।
आस्ते विशाले सुमुखः शिरस्सरसि शङ्करः।।

—पल्लव— अभिलेखे

485. अमन्दगुणमन्दिरं विमलरत्नविद्याङ्कुर-
ङ्कलाधरकृतादरं कलितचित्तलक्ष्मीवरम्।

शिरोधृतनदीवरं शिवकरं रमोमावरं
नमामि दुरिताहरं गुरुवरं सुनागेश्वरम्।।

—नागेशकृतवैयाकरणसिद्धान्तमञ्जूषायाष्टीकायां
कलाख्यायां पायगुण्डे वैद्यनाथस्य

486. अमायश्चित्रमायोसावगुणो गुणभाजनः।
स्वस्थो निरुत्तरो जीयादनीशः परमेश्वरः।।

—पल्लव—अभिलेखे

487. अम्बागृहीतवामार्द्धं वन्दे चन्द्रकलाधरम्।
लावण्यामधुराकारं कारुण्यरसवारिधिम्।।

—रसाभिव्यञ्जकाख्यायां अद्वैतमकरन्दस्य
व्याख्यायां कैवल्यानन्दयोगीन्द्रस्य

488. अम्बिकारसिकापाङ्गमाविस्मितमुखाम्बुजम्।
भजे भुजङ्गललितं महो वैयाघ्रचर्मिणम्।।

—भावप्रकाशने शारदातनयस्य

489. अरागमपि रागाढ्यरचनाचतुरं परं।
हरं नवनवाश्चर्यसर्गचित्रकरं नुमः।।

—कथासरित्सागरे द्वादशे लम्बके सोमदेवभट्टस्य

490. अर्केन्दुभौमबुधवाक्पतिकाव्यमन्दा
मन्दारकुन्दकुमुदैर्यमुदर्चयन्ति।
तस्य प्रभोरघमलोष्मशमादमन्दा
मन्दाकिनीव मुदमर्पयतु स्तुतिर्वः।।

—स्तुति०

491. अर्द्धाङ्गे योऽतिशुद्धस्फटिकविरचितच्छद्मना चन्द्रमौलिः
यन्नाभीकोटरान्तर्घुणरणितमिव ब्रह्मणो वेदघोषः।

एकोऽसावद्वितीयो भुवनमयमहामण्डपस्येन्द्रनील-
स्तम्भः संसारयात्राश्रमभरविकलस्यावलम्बो ममास्तु।।
—सिद्धान्तरत्नमालायां श्रीवत्सलाञ्छनशर्मणः

492. अर्द्धाङ्गे ललिता गिरीन्द्रतनया गङ्गा जटायां स्थिता
यस्याङ्के सुभगं विभूतिधवलं मौलौ हिमांशुं दधत्।
विघ्नध्वंसपटुर्महाहिवलयं व्याघ्राजिनं धारयन्
शम्भुस्ताण्डवकेलिभावकुशलो नृत्येश्वरः पातु वः।।
—मुदावतीहरणे भूपतीन्द्रमल्लस्य

493. अर्वाञ्चत्पञ्चशाखः स्फुरदुपरिजटामण्डलैः संश्रितानां
नित्यापर्णोऽपि तापत्रितयमपनयन् स्थाणुरव्यादपूर्वः।
यः प्रोन्मीलत्कपर्दैः शिरसि विरचिताबालबन्धे द्युसिन्धोः
पाथोभिर्लब्धसेकः फलति फलशतं वाञ्छितं भक्तिभाजाम्।।
—सदुक्ति० जह्नोः

494. अलङ्कृत-वचोऽम्बरः कुतुक-चूर्ण-चित्रस्मरः
कला विलसितोऽकलोऽसम विषादशङ्कोत्तरः।
कवीन्द्रकृतिभामिनी सहचरोऽद्वितीयो वरो
मदीयमतिभास्करः स्फुरतु कोऽपि गङ्गाधरः।।
—जगन्नाथकृतरसगङ्गाधरस्य टीकायां
रसचन्द्रिकाख्यायां ओझाकेदारनाथस्य

495. अवतु सकललोकान्नीलकण्ठः स्मरारि-
स्त्रिपुरदहनशक्तो मूर्ध्नि भास्वच्छशाङ्कः।
तुहिनगिरिसुताया वल्लभः शूलपाणिः
सकलजनशरण्यः सर्वलोकैकनाथः।।
—रीवाँ – जनपदस्थ–पत्राभिलेखे त्रैलोक्यमल्लदेवस्य

496. अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु।
ईश्वरमुमया न परं वन्देऽनुमयापि तदधिगतम्।।

—खण्डनखण्डखाद्ये श्रीहर्षस्य

497. अव्यात्स वः शिरसि यस्य विलोचनाग्नि-
ज्वालावलीढसुरसिन्धुजलोपगूढः।
अद्यापि वाडवशिखापरिणद्धमुग्ध -
दुग्धाब्धिमध्यग इव श्रियमेति चन्द्रः।।

—स्तुतिकु०

498. अव्यात्स वः सुकृतिनामलिकेषु धूली-
पट्टीकृतेषु पदरेणुभरेण यस्य।
धाताक्षराणि लिखति क्षितिपालमौलि-
मालार्चिताङ्घ्रिकमलो भविता भुवीति।।

—स्तुतिकु०

499. अशेषफलदातारं भवाब्धितरणेतरीम्।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम्।।

—वैयाकरणभूषणे रङ्गोजिभट्टसूनोर्कोण्डभट्टस्य

500. अश्रान्तमुत्पुलकजालमजस्रमाविः
स्वेदाम्बुबिन्दुसततार्द्धनिमीलिताक्षम्।
नित्यं दरोच्छ्वसितनीवि सदा सकम्पं
श्यामारुणं भवतु धाम शिवङ्करं नः।।

—मणिदर्पणे राजचूडामणिमखिशर्मणः

501. असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वपि च रसिकः शैलदुहितुः।
प्रमोदं वो दिश्यात्कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः।।

—सुभा०सुधा०भा०

502. अहिभूषणोऽप्यभयदः सुकलितहालाहलोऽपि यो नित्यः।
दिग्वसनोऽप्यखिलेशस्तं शशधरशेखरं वन्दे।।

—चालुक्यराजअय्यनमहाकाव्ये

503. आखुर्वाञ्छति भस्मसूत्रहरणं व्यालस्तथा मूषकं
व्यालं बर्हिरयं हरिश्च वृषभं गङ्गा तथा चन्द्रकम्।
इत्थं दुःखमहर्निशं शृणु विभो सोढव्यमेतत्कथं
शम्भोरात्मदशानिबोधनपरं त्वां पातु दीनं वचः।।

—सुभा०सुधा०भा०

504. आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम्।
आहार्यं चन्द्रतारादितं नुमः सात्त्विकं शिवम्।।

—सङ्गीतनृत्ये शार्ङ्गदेवस्य

505. आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै।।

—सुभा०सुधा०भा०

506. आदौ पादतले कृतस्थितिरथो प्राप्तः करालम्बनं
वाल्लभ्यं शुभदृङ्निवेशनवशोत्पन्नं प्रपन्नस्ततः।
अन्ते येन शिरोधिरोहणमहामाहात्म्यमाप्तो विधु-
र्भूत्यै सः क्रमवर्धमानमहिमा स्वामिप्रसादोऽस्तु वः।।

—स्तुतिकु०

507. आद्यन्तमङ्गलमजातसमानभावं
आद्यन्तविश्वमजरामयमात्मवेदम्।
पञ्चाननं प्रबलपञ्चविनोदशीलं
सम्भावये मनसि शङ्करमम्बिकेशम्।।

—क्रियासारे नीलकण्ठदीक्षितस्य

508. आद्यो यो हेतुर्विश्वसर्गे महेशो
यज्ञादीनां यो हव्यनिक्षेपदेवः।
भूतानां भर्त्ता सर्वभूतान्तरात्मा
हृद्यं मे कार्यं तत्प्रणामः करोतु।।

—मीमांसार्थसङ्ग्रहे रामेश्वरशिवयोगिनः

509. आधारादिसमस्तचक्रनिचये यो हंसरुपः शिवो
नित्यानन्दगु रुप्रसादविभवाद् भावादिसंज्ञोऽभवत्।
आचारादिविभेदतः पुनरसौ षड्लिङ्गरुपोऽभवत्
तस्मै श्रीगुरुमूर्तये गिरिसुताभर्त्रे नमस्कुर्महे।।

—लिङ्गधारणचन्द्रिकायां नन्दिकेश्वरस्य

510. आधारं यमवाप्य निर्मलमियं देवी पराऽम्बाऽव्यया
रुपैः स्वैरथ भूर्भुवः स्वरभिधैर्वेदेषु जेगीयते।
यञ्चाखण्डममुं निजैर्विरचिते देहाभिधे पञ्जरे
तन्मात्रैः शकलीकरोत्यविकलः पायात् स मां शङ्करः।।

—ब्रह्मसूत्रभाष्यालोचने चतुःसूत्र्यां नणिशङ्करोपाध्यायस्य

511. आमोदैः परितोषिताः परिषदः प्रत्येकमाशाभृतां
सान्द्रैः पिञ्जरिताः परागपटलैराशावकाशा दश।
आहूता मकरन्दबिन्दुनिकरैः पुष्पन्धयश्रेणयो
येनालाय स वः पुनातु सततः शम्भोः प्रसूनाञ्जलिः।।

—कुसुमाञ्जल्यामोदे शङ्करमिश्रस्य

512. आराधकेप्सितफलाधिकदानदक्षा
दाक्षायणी दलितपद्ममनोहराक्षी।
साकारभाग्यमिव यस्य नमोऽस्तु तस्मै
विश्वेश्वराय भवभीतिभिदे भवाय।।

—न्यायचन्द्रिकायां केशवभट्टस्य

513. आशोणां फणिनः फणोपलरुचा सैंहीं वसानं त्वचं
शुभ्रां लोचनजन्मनाकपिशयद्भासा कपालावलीम्।
तन्वीं ध्वान्तनुदं मृगाकृतिभृतो बिभ्रत्कलां मौलिना
दिश्यादन्धकविद्विषः स्फुरदहिस्थेयः पदं वो वपुः।।

—हरहा—अभिलेखे

514. आसन्नाय सुदूराय गुप्ताय प्रकटात्मने।
सुलभायाति दुर्गाय नमश्चित्राय शम्भवे।।

—सुभा०

515. आसीने पूष्णि तूर्ष्णीं व्यसनिनि शशिनि व्योम्नि कृष्णे सतृष्णे
दैत्येन्द्रे जातनिद्रे द्रवति मघवति क्लान्तकान्तौ कृतान्ते।
अब्रह्मण्यं ब्रुवाणे कमलपुटकुटीश्रोत्रियेशान्त्युपाये
पायाद्वः कालकूटं झटिति कवलयँल्लीलया नीलकण्ठः।।

—सुभा० सुधा० भा०

516. इन्दुं मूर्ध्नि दधत् क्षीणं पातु वः शशिशेखरः।
खेदादिव सदासन्न गौरीमुखपराजयात्।।

—अर्थुन्— अभिलेखे

517. इन्दूपलेन्द्रमणिसुन्दरमिन्दुचूडं
वृन्दारवृन्दपरिवन्दितपादपद्मम्।
आमन्दमन्दहसितोल्लसदाननेन्दुं
वन्दामहे वयममन्दमुदाम्बिकेशम्।।

—हरिस्तुतेः व्याख्यायां हरितत्त्वमुक्तावल्याख्यायां
शङ्कराचार्यस्य

518. इन्दोर्जटासुविशदोऽग्निशिखापिशङ्गी
लालाटचक्षुषि गलद्विषमञ्जनाभम्।

सत्वंरजस्तम इति त्रिगुणस्य तस्य
स्थानक्रमं गतवतेऽस्तु नमः शिवाय।।

—बानपुर —अभिलेखे इन्द्ररथस्य

519. ईशमनीशमनीदृशरूपं विग्रहभाजमविग्रहभाजम्।
दानवकालमदानवलारिं नौमि नितान्तमसाधुकृतान्तम्।।

—कार्त्तवीर्यार्जुनकवचे

520. ईशानोऽवतु भूपतिं भुजगभुक्पत्रं भवानीभवम्
कीर्तिं साकमिहाहितेन महता सम्प्रेषयन्तं दिवि।
कान्ताभिः सुखपाणिपीडनमथो दृष्टं चिकीर्षुं मुदा
केयूरादिसुवर्णभूषणवरैः सम्भूषयन्तुं विभुः।।

—गणेशपरिणये रविनाथशर्मणः

521. ईशानं परमानन्दं पुमिन्दुवदनामयम्।
अनादिनिधनं देवं वन्दे मुग्धेन्दुशेखरम्।।

—वीरशैवसारोद्धारस्य भाष्ये सोमनाथाख्यायां सोमनाथस्य

522. ईशानं सर्वविद्यानामीश्वरं पार्वतीपतिम्।
भजामि श्रीमहादेवं सर्वदेवोत्तमं प्रभुम्।।

—महिम्नटीकायां अहोबलस्य

523. उज्झित्वा दिशमम्बरं वरतरं वासो वसानश्चिरं
हित्वा भैक्ष्यमनातुरो रतिकरस्थानं समालम्भितः।
त्यक्त्वा भस्मकृताङ्गरागसुरभिः श्रीखण्डसारद्रवै-
र्देवः पातु हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः।।

—गृहस्थरत्नाकरे गङ्गेश्वरठाकुरस्य

524. उत्तप्तहेमरुचि चन्द्रकला कलापे
बालप्रवालरुचिरे च करे कपालम्।
ताम्रेऽधरे च हसितं सितमद्भुतेयं
विच्छित्तिरिन्दुशिरसः कुशलं क्रियाद्वः।।

—स्तुतिकु०

525. उत्तुङ्गं सुरनिम्नगावलयितं नानामृगैः सङ्कुलं
सङ्क्रामन्मृगयुर्द्रुतं हिमवतः शृङ्गान्तरं शृङ्गतः।
सानन्दं विजयाय सत्त्वविजितो दिव्यं निजास्त्रं दिशन्
युष्मानेष पिनाकपाणिरवताल्लीलाकिरातः शिवः।।

—छत्रपतिसाम्राज्ये शङ्करमाणिकलालस्य

526. उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणालीपतत्
स्वर्गङ्गाजलदण्डिकावलयितं निर्माय तत्पञ्जरम्।
सम्भ्राम्यद्भुजदण्डपक्षपटलद्वन्द्वेन हंसायितम् -
त्रैलोक्यव्ययनाटिकानयनटः स्वामी जगत्त्रायताम्।।

—सुभा०सुधा०भा०

527. उद्यत्कालीकटाक्षावलिवलनचलल्लोचनापाङ्गरङ्गः
क्रुध्यद्दैतेयमुक्तागतशरनिकरच्छेदिबाणप्रयोगः।
मीलच्छृङ्गार-वीरस्फुरितभुजयुगोद्भासिरोमाञ्चिताङ्गः
सन्धाने सावधानस्त्रिपुरनृपजयी पातु गङ्गेश्वरो वः।।

—गङ्गादासप्रतापविलासनाटके गङ्गाधरस्य

528. उपाधिगम्योप्यनुपाधिगम्यः
समावलोक्योप्यसमावलोक्यः।
भवोपि यो भूदभवः शिवोऽयं
जगत्यपायादपि नः स पायात्।।

—रघुवंशस्य टीकायां संजीवनी नाम्न्यां मल्लिनाथस्य

529. उमाकटितटस्फुरत्करिवराननालोकन-
प्रसन्नहृदयं धियासदयमिन्दुचूडं मृडम्।
प्रणम्य गिरिजाधवं भजनमात्रदत्तेप्सितम्
स्मिताननमनामयं प्रियमुमासहायं मुदा।।

—लिङ्गार्चनचन्द्रिकायां सदाशिवस्य

530. उमाप्रणामसंक्रान्तचरणालक्तकः शशी।
सन्ध्यारुण इवाभाति यस्य पायात्स वः शिवः।।
—वृहत्कथामञ्जर्यां क्षेमेन्द्रस्य

531. उमावामकायं हृताशेषमायं खलानामपायं श्रितानामुपेयम्।
असन्नामधेयं महासामगेयं सुरेशं गिरीशं महेशं तमीडे।।
—साहित्यकण्टकोद्धारे

532. उल्लसतिलोचनाग्नौ जगदवदानानि जुह्वतो यस्य।
प्रथमाहुतिर्मनोजः स जयति देवः पुरां भेत्ता।।
—श्रीमद्भगवन्नामकौमुद्यां लक्ष्मीधरस्य

533. ऊर्ध्वबद्धजटाजूटं क्रोडीकृतसुरापगम्।
भजामि यामिनीकान्तकान्तिं भालस्थलं हरम्।।
—छन्दोगाह्निकोद्धारे शङ्करमिश्रस्य

534. एकत्र बोधमुद्रां कलयन्नन्यत्र पुस्तकं पाणौ।
व्याकुर्वन्निगमान्तं देवः पायाद्वटद्रुतलवासी।।
—कुवलयानन्दस्य टीकायां रसिकरञ्जनी
नाम्न्यां गङ्गाधराध्वरिणः

535. एकत्र संनिपतितसितकण्ठबिम्ब-
मन्यत्र चन्द्रकिरणाहितशुभ्रभावम्।
सन्ध्याजलाञ्जलिमनङ्गरिपोर्नमामि
हस्तप्रविष्टमिव पुण्यतमं प्रयागम्।।
—किरणावलीप्रकाशे वर्धमानोपाध्यायस्य

536. एकस्य यस्य सकलः करणानपेक्ष-
ज्ञानक्रियस्य पुरतः स्फुरति प्रपञ्चः।

पश्यञ्जगत् करतलामलकीफलाभं
लाभं स पुष्यतु परं परमेश्वरो वः।।

—स्तुतिकु०

537. एकोऽन्ते द्विसमस्त्रिलोचन इति ख्यातश्चतुर्भिः
स्तुतो वेदैः पञ्चमुखः षडाननपिता सप्तर्षिभिर्वन्दितः।
अष्टाङ्गो नव तुल्य आमरगणे वासो दशाशा दधत्।
स्वश्चैकादश सोऽवतान्नवजितो यो द्वादशात्मांशुभिः।।

—सुभा०सुधा०भा०

538. एवं स्थापय सुभ्रुबाहुलतिकामेवं कुरु स्थानक
नात्युच्चैर्नम कुञ्चिताग्रचरणं मां पश्य तावत्क्षणम्।
गौरीं नर्तयतः स्ववक्त्रमुरजेनाम्भोधरध्वानिना
शम्भोर्वः सुखयन्तु लम्भितलयच्छेदाहतास्तालिकाः।।

—सदुक्ति० योगेश्वरस्य

539. ऐन्दव्या कलयावतंसितकचं सौन्दर्यसारास्पदं
कारुण्यामृतपूरपूरितलसल्लीलाकटाक्षाङ्कुरम्।
उद्यत्कोटिदिनेशमण्डलरुचिन्यक्कारिभाभासुरं
वन्दे पाशसृणीक्षुचापसुमनो बाणपहं तन्महः।।

—मालतीमाधवस्य टीकायां भावप्रदीपिकाख्यायां
त्रिपुरारिसूरिशर्मणः

540. ऐश्वर्यं परमं तत्त्वयादिमध्यान्तवर्जितम्
आधारं सर्वलोकानामनाधारमविक्रियम्।
अनन्तानन्दबोधाम्बुनिधिमद्भुतविक्रमम्
अम्बिकापतिमीशानमनिशं प्रणमाम्यहम्।।

—शिवज्ञानदीपिकायां आदिनाथमहायोगिनः

541. ओम् नमः परमार्थैकरुपाय परमात्मने।
स्वेच्छावभासितासत्यभेदभिन्नाय शम्भवे।।

—स्तुतिकु०

542. ओम् नमः शाश्वतिकानन्दज्ञानैश्वर्यमयात्मने।
संकल्पं सफलब्रह्मस्तंभारंभाय शम्भवे।।

—न्यायमञ्जर्यां जयन्तभट्टस्य

543. औषधीपतिनेत्राय पद्मिनीपतिमूर्तये।
कालकालाय नीलाय पार्वतीपतये नमः।।

—अर्कप्रकाशे लङ्कानाथस्य

544. कटुविशिखशिखिप्रपञ्च पञ्चानन धनदप्रियमित्र मित्रनेत्र।
धृतसकलविकल्प कल्पशेषप्रकट महानट नाटय प्रसादम्।।

—सदुक्ति० सञ्चाधरस्य

545. कण्ठच्छायमिषेण कल्परजनीमुत्तंसमन्दाकिनी-
रूपेण प्रलयाब्धिमूर्ध्वनयनव्याजेन कल्पानलम्।
भूषापन्नगकेलिपानकपटादेकोनपञ्चाशतम्
वातानप्युपसंहरन्नवतु वः कल्पान्तशान्तौ शिवः।।

—सदुक्ति० चित्तपस्य

546. कण्ठश्रियं कुवलयस्तबकाभिराम-
दामानुकारिविकटच्छविकालकूटम्।
बिभ्रत्सुखानि दिशतादुपहारपीत-
धूपोत्थधूममलिनामिव धूर्जटिर्वः।।

—हरविजये राजानकरत्नाकरस्य

547. कण्ठस्थाहिमणीविभूषिततनू राजज्जटापल्लवो
हृष्यन्मौलिसुधाकरैककुसुमस्तत्पञ्चशाखाश्रयः।

स्थाणुर्मे फलदोऽस्तु नित्यमधिकं गौरीमुखेन्दुद्रव-
त्पीयूषद्रवपानदोहदवशात्कल्पद्रुमत्वं वहन् ।।

—नारायणभट्टकृतवेणीसंहारस्य टीकायां जगद्धरस्य

548. कथकाशक्तिलिङ्गेषु तत्त्वधीः सुधियां यतः ।
तं पञ्चममिवाध्यायमनुध्यायामि शङ्करम् ।।

—अन्वीक्षानयतत्त्वबोधे वर्द्धमानोपाध्यायस्य

549. कथयत कथमेषा मेनया विप्रदत्ता
शिव शिव गिरिपुत्री वृद्धकापालिकाय ।
इति वदति पुरन्ध्रीमण्डले सिद्धिलेश-
व्ययकृतवरवेशः पातुः वः श्रीमहेशः ।।

—सुभा० सुधा० भा०

550. करकलितपिनाक नाकनाथ द्विषदुरुमानसशूल शूलपाणे ।
भव वृषभविमान मानशौण्ड त्रिजगदकारणतारक प्रसीद ।।

—सदुक्ति० सञ्चाधरस्य

551. करकलितभुजङ्गो मस्तविन्यस्तगङ्गो
विदितनटतरङ्गो दत्तदैतेयभङ्गः ।
चिरविगलदनङ्गस्त्यक्तसङ्गोऽङ्गनाङ्गो
भवतु तव विभूत्यै शम्भुरुन्मत्तगङ्गः ।।

—जयदेवकृतगीतगोविन्दस्य टीकायां
दीपिकाख्यायां जगद्धरस्य

552. करालभालपट्टिका धगद् धगद्धगज्ज्वलद्
धनञ्जयाहुतीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनी कुचाग्रचित्रपत्रक-
प्रकल्पनैकशिल्पिनि त्रिलोचने रतिर्मम ।।

—अजीर्णतिमिरभास्करे

553. करैर्दधानः परशुं कुरंगं वराख्यमुद्रामुपदेशमुद्राम्।
वटस्य मूले विबुधोपसेव्यः सदाशिवायास्तु सदाशिवो नः।।

—मंत्रमहोदधेः व्याख्यायां नौकाख्यायां काशीनाथस्य

554. कर्णिकादिष्विव स्वर्णमर्णवादिष्विवोदकम्।
भेदिष्वभेदि यत्तस्मै परस्मै महसे नमः।।

—स्तुतिकु०

555. कर्पूरकुन्दकुमुदकैलासोद्भवसोदरम्।
विघ्नविध्वंसकं नाम नमामि शिवदैवतम्।।

—कारणताविचारे जगदीशतर्कालङ्कारस्य

556. कर्पूरगौरं मुनिचित्तचौरं भस्माङ्गरागं गलशोभिनागम्।
गोराजवाहं कृतकामदाहं वन्दे महेशं जटिलोर्ध्वकेशम्।।

—सुभाषितपद्धतौ श्रीपतेः

557. कलत्रीकृतवामार्द्धमर्द्धेन्दुकृतशेखरम्।
भूषणीभूतभोगीन्द्रमस्तु स्वस्तिकरं महः।।

—आपदेवकृतमीमांसान्यायप्रकाशस्य टीकायां
सारविवेचिन्याख्यायाम् चिन्नस्वामिशास्त्रिणः

558. कलां बिभर्त्ति क्षणदाकरस्य
प्रकाशिताशां शिरसा गभस्तिभिः।
नमोस्तु तस्मै सुरवन्दिताङ्घ्रये
समस्तविद्याप्रभवाय शम्भवे।।

—महाभास्करीये परमेश्वरस्य

559. कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः
क्रीडन्कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः।

कङ्कालक्रीडनोत्कः कलितकलकल': कालकालीकलत्रः
कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिको नः।।

—सुभा० सुधा० भा०

560. कल्पान्ते क्रोधनस्य त्रिपुरविजयिनः क्रीडया संचरिष्णोः
कृत्त्वापि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः।
दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिं प्रेक्ष्य चात्मीयमूर्त्तिं
ग्रासव्यासक्तमोघश्रमजनितरुषः पान्तु वो गर्जितानि।।

—सुभा० सुधा० भा०

561. कल्पापायहुताशधूमपटलक्रूरं विषं लीलया
कण्ठे यः कलयाम्बभूव विबुधैर्विभ्यद्भिरभ्यर्थितः।
यस्तार्णीरिव निर्द्ददाह विततीश्शुष्काः पुरीरासुरी-
र्यश्चक्षुर्ज्वलने जुहाव मदनं पायादपायात्स वः।।

—त्रिचिनोपोलीगुहाभिलेखे

562. कल्याणं स महेश्वरो दिशतु यः कैलासमुल्लासतो
धून्वन्तं दशकन्धरं दृढतरं व्यस्ताङ्घ्रिपद्माग्रतः।
आगन्तुं बलिमन्दिरस्य रचयन्नायासलेशं विना
भीत्याश्लिष्टवतीमतीव गिरिजां प्रीतामतानीत्क्षणात्।।

—मदनमञ्जरीनाटके

563. कस्तूरीपरिदिग्धमुग्धकमला वक्षोजबुद्ध्या ध्रुवं
नीलाद्रेः शिखरेषु नित्यकुतुकी दैत्यारिख्यात् स नः।
प्रत्यङ्गाभरणेषु दीप्तवपुषः सेवासु देवः स्फुटं
यस्याशेषसुरात्मता विदधते चन्द्रार्द्धचूडादयः।।

—नरकासुरविजयव्यायोगे धर्मसूरिणः

564. कान्तामुखं सन्ततमन्तिकस्थं यस्यावतंसेन्दुरवेक्ष्यमाणः।
अवाप कार्श्यं किमु पाण्डुताञ्च ददातु देवः स सदा मुदं वः।।
—बौधायनीयशुल्बसूत्रस्य शुल्बमीमांसाटीकायां व्यंकटेशदीक्षितस्य

565. कामेकान्त विलोचनानलहतप्रोद्भूतकोपत्रयम्
भास्वद्भास्वरदक्षिणे क्षणरुचिव्यक्तप्रसादोदयम्।
कान्तोद्यद्विपरीतकेलिकलितं कामाननेनान्वितम्
कर्णालम्बितकेशमीक्षितशिवं कान्तं तदीडेमहि।।
—ताराभक्तिसुधार्णवे नरसिंहठक्कुरस्य

566. कामं मा कामयध्वं वृषमपि च भृशं माद्रियध्वं न वित्ते
चित्तं दत्तश्रयध्वं परममृतफला या कला तामिहैकाम्।
इत्थं देवः स्मरारिर्वृषमधरचरीकृत्य मूर्त्यैव दित्सन्
निः स्वो विश्वोपदेशानमृतकरकलाशेखरस्त्रायतां वः।।
—सदुक्ति० कविपण्डितश्रीहर्षस्य

567. कारुण्यकल्लोलितदृष्टिपातम्
कन्दर्पदर्पानलकालमेकम्।
कैवल्यकल्पद्रुममूलकन्दम्
वंदे महः कंदलमर्कबन्धुम्।।
—पद्यचूडामणौ बुद्धघोषस्य

568. कालारातिः कराग्रभ्रमितशितमहाशूलविप्रोतदैत्यो
लोकेशश्शैलकन्याकुचकलशमिलच्चारुदोरान्तरालः।
कुर्यात्तत्पादपङ्केरुहरुचिरपरागोत्करैः पूर्णकामा-
नस्मानेतान् पवित्रीकृतनतशिरसोऽशोकगेहाधिवासी।।
—अन्तकवधे चेरुलियत्वासुदेवनन्पीशस्य

569. कालोद्यन्नटनप्रकारविलुठद्गङ्गातरङ्गच्छटा-
जातक्षालितफालसम्भवलसत्स्वेदोदबिन्दुक्रमः।

भूषाभूतभुजङ्गपुङ्गवपरिभ्राम्यत्स्फटारत्नवि-
द्योतव्रातनिरुढमाङ्गलिकसन्नीराजनोऽव्याच्छिवः।।

—कन्यमाधवे सुब्रह्मण्यस्य

570. कालं दृशैव शमयन् सफलप्रयासं
यः श्वेतमुत्तमचमत्कृतिकृच्चकार।
श्वेतं यशः प्रशमयन्नसतां सतां च
कालं कृतार्थयति यः स शिवोऽवताद्वः।।

—स्तुतिकु०

571. कीर्त्तनादेव नश्यन्ति यस्य संसारजागदाः।
तमादिभिषजं शम्भुं जरामृत्युहरं स्तुमः।।

—वैद्यकल्पतरौ वैजनाथस्य

572. कुलशैलदलं पूर्णसुवर्णगिरिकर्णिकम्।
नमोऽधितिष्ठतेऽनन्तनालं कमलविष्टरम्।।

—स्तुतिकु०

573. कृपाकटाक्षतो यस्य ब्रह्माब्रह्माण्डमासृजन्।
सोमः सोमार्थभूषोऽसौ श्रीरुद्रः श्रेयसेऽस्तु नः।।

—ब्राह्मणसर्वस्यटीकायाम्

574. कृपासमुद्रं सुमुखं त्रिनेत्रं जटाधरं पार्वतिवामभागम्।
सदाशिवं रुद्रमनन्तरूपं चिदम्बरेशं हृदि भावयामि।।

—वेदपादस्तोत्रे जैमिनेः

575. कृष्णेन त्रिजगत्प्रसिद्धविजयप्रख्यातिना लोचनं
भक्त्या वासवसूनुना कृतवता पादाब्जपूजाविधौ।
यस्मादाप्तसुदर्शनेन निखिलं विश्वं विधेयीकृतं
कृष्णेनेव स धूर्जटिर्घटयतु श्रेयांसि भूयांसि नः।।

—स्तुतिकु०

876. केयूरीकृतकङ्कणीकृतजटाजूटावतंसीकृत-
ज्यावल्लीकृतकुण्डलीकृतकटीसूत्राकृताहीश्वरः।
पायाद्वस्तिलकीकृतप्रियतमादर्शीकृताक्षीकृत-
द्यूतारम्भ-पणीकृतेन्दुशकलः कात्यायनीकामुकः।।

—सुभा०सुधा०भा०

877. कैलाशशिखरासीनं कालकन्दर्पनाशनम्।
प्रसन्नं परमेशानं जगदानन्दकारणम्।।

—आनन्दकन्दे

878. कैलासाद्रावुदस्ते परिचलति गणेषूल्लसत्कौतुकेषु
क्रोडं मातुः कुमारे विशति विषमुचि प्रेक्षमाणे सरोषम्।
पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं
क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयघनमुमया पातु हृष्टः शिवो नः।।

—प्रियदर्शिकायां श्रीहर्षस्य

879. कैलासाद्रिनिभं शशाङ्कशकलं स्फूर्जज्जटामण्डितम्
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासितम्।
मुद्राटंककुरंगजानुविलसत्पाणिं प्रसन्नाननम्
कक्षाबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम्।।

—श्रीकण्ठमातृकायाम्

880. कैलासे शैलाटी करुणारसपूर्णचित्तकमनीयम्।
प्रणमामि मूलकन्दं गौरीयुतवामभागमरुणाङ्कम्।।

पर्यायशब्दरत्ने धनञ्जयभट्टाचार्यस्य

581. कैलासे सनकादयोमुनिगणाब्रह्मादिदेवान्विताः
श्रीमत्कल्पतरोरधोमणिमये पीठे स्थितं सर्वदा।
यं सम्पूज्य सुवर्णवारिजकृतैर्माल्यैर्मृडानीयुतम्
नृत्यं गीतपुरःसरं विदधते तस्मै नमः शम्भवे।।

—रामविलासकाव्ये विश्वनाथकवेः

582. क्रीडन्मन्दरकन्दरोदरवलन्मन्दारवृन्दावने
क्रोधान्धान्धकदानवादिहनने जृम्भस्त्रिशूलोद्गमः।
त्रैलोक्याखिलसङ्कटोत्कटभयोद्रेकान्धकारांशुमान्
पायाद्वस्त्रिपुरप्रमाथनपटुर्देवो हि पञ्चाननः।।

—सुभा०सुधा० भा०

583. क्रोधेद्धैर्दृष्टिपातैर्मुहुरुपशमिता वह्नयोऽमी त्रयोऽपि
त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति।
दक्षः स्तौत्यस्य पत्नी विलपति करुणं विद्रुतं चापि देवैः
शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः।।

—रत्नावल्यां श्रीहर्षस्य

584. क्वाप्यग्निः क्वचिदद्रिभूर्नरशिरः कीर्णा क्वचिन्निम्नगा
रुक्षा क्वापि जटा क्वचिद्विषधरा रौद्रं विषं कुत्रचित्।
तादृग्भूतगणैर्वृतो मम चिताभस्मोर्मिकिर्मीरितः
संसारं प्रतिमुच्य यातुरपुनर्योगाय पन्थाः शिवः।।

—सदुक्ति० बिल्हणस्य

585. क्षीराम्भोनिधिमन्थनोद्भवविषात् सदह्यमानान् सुरान्
ब्रह्मादीनवलोक्य यः करुणया हालाहलाख्यं विषम्।
निःशङ्कं निजलीलया कवलयन् लोकान् ररक्षादराद्
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः।।

—गङ्गाधराष्टके

586. क्षीराम्भोराशितूणं धृतपरशुधनुःशूलदीव्यत्कृपाणम्
गौरीकान्ताभिरामं निटिलहुतवहज्वालनिर्दग्धकामम्।
ताराक्ष्माभृद्विहारं सकलभुवनभृन्नागराट्कण्ठहारम्
वीरं रौद्राधिदेवं शरणशिवकरं श्रीगिरीशं भजेऽहम्।।

—श्रीगिरीशाष्टके

587. क्षीरार्णवस्य चरणाब्जतले निवास-
मासेदुषस्तनयमप्रतिमप्रसादः।
यो मूर्ध्नि लालयति बालमसौ दयाब्धि-
र्देवस्तनोतु मुदमाश्रितवल्लभो वः।।

—स्तुतिकु०

588. गङ्गाधराय गरूडध्वजसंनुताय
मांगल्यदायिमहितोरगभूषणाय।
सङ्गीतलोलहृदयाय सदाशिवाय
श्रीकालहस्तिनिलयाय नमः शिवाय।।

—कालहस्तीश्वराष्टके

589. गङ्गाधरायाऽमितविक्रमाय त्र्यक्षाय सर्वाय दिगम्बराय।
त्रिशूलहस्ताय नमः शिवाय सुरेन्द्रवन्द्याय जटाधराय।।

—भास्कराचार्यकृत—सिद्धान्तशिरोमणेः
वासनाभाष्ये नृसिंहदैवज्ञस्य

590. गङ्गाधरो रुचिरशीतकराभिरामो
भालाक्षिवह्निनिभसम्भृतवाडवाग्निः।
बिभ्रद्विषं सुविषमं गुणरत्नरम्यो
भर्गः समुद्र इव वर्द्धयतु श्रियं वः।।

—समुद्रमथनाभिधाने समवकारे अमात्यवत्सराजस्य

591. गङ्गापूरनिवासपङ्किलशिरस्सञ्जातसम्यग्जटा
विष्वग्व्यूहनवीनकाननवलच्चन्द्रौषधीवासभूः।
सेवानम्रसुरासुरेन्द्रमुकुटप्रत्युप्तरत्नद्युति
प्रोद्भिन्नामलपन्नखावलिधरस्त्वां पातु गङ्गाधरः।।

—कुमारसम्भवस्यटीकायां रघुपतेः

592. गङ्गापूरप्रचलितजटास्रस्तभोगीन्द्रभीता-
मालिंगन्तीमचलतनयां सस्मितं वीक्षमाणः।
लीलापाङ्गैः प्रणतजनतां नन्दयँश्चन्द्रमौलि-
र्मोहध्वान्तं हरतु परमानन्दमूर्त्तिः शिवो नः।।

—स्वराज्यसिद्ध्यां गङ्गाधरसरस्वतीभिक्षोः

593. गङ्गाप्रवाहपरिपूतजटाकलापं
क्रीडत्फणीन्द्रचकितेन्दुमणिप्रभाभिः।
प्रज्वालितं स्फुरिततक्षकहारबन्धं
प्रच्छिन्नकालविषकण्ठहरं नमामि।।

—आपस्तम्बीय सूत्रस्य प्रयोगप्रदीपिकावृत्तौ कौशिकस्य

594. गङ्गोद्भासितमौलिश्चन्द्रकलाललितशेखरः सततम्।
अङ्गीकृतगलगरलो जयति जयन्तीपतिर्जगति।।

—उदाहरणचन्द्रिकायां वैद्यनाथस्य

595. गर्जद्भीमभुजङ्गभीषणफणाफूत्कारभीतिप्रदः
क्रीडत्प्रेतपिशाचराक्षसगणःप्रत्यक्षतः प्रान्ततः।
भालस्थः प्रलयानलोद्धटशिखः सङ्क्रान्तसर्वास्पदः
शार्दूलाजिनभृद्भयानकभयो भूयाद्भवो भूतये।।

—सुभा० सुधा० भा०

596. गौरीकुचद्वन्द्वविलिप्तचन्द्रश्रीचन्दनोद्भासितचारुमध्यः।
महयं ददातु प्रसृतैः कटाक्षैः श्रेयांसि राजार्द्धलसत्किरीटः।।

—सुजनमनः कुमुदचन्द्रिकायां तिम्मकवेः

597. गौरीक्षणं भूधरजाहिनाथः
पत्रं तृतीयं दयितोपवीतम्।
यस्याम्बरं द्वादशलोचनाख्यः
काष्ठासुतः पातु सदाशिवो वः।

—वैद्यानुभवविनोदे

598. गौरीमञ्जुमुखारविन्दमधुपामालास्थिभूषाधरः
शक्राद्यैरखिलैरजस्रममरैस्तोष्टूय्यमानोभृशम्।
शूलाद्यायुधभूषितस्त्रिनयनो दक्षाध्वरध्वंसनो
नन्द्यादि प्रमथैर्युतोस्तु भवतां तुष्ट्यै सदा धूर्जटिः।।

—अनूपविवेके अनूपसिंहस्य

599. गौरी वामे सर्वसम्पत्स्वरूपा
विघ्नध्वंसी यस्य चाङ्के गणेशः।
प्रह्लादीन्दुद्योतिमौलिः स ईशः
दद्यात् कामान् मामकीनानशेषान्।।

—किरातार्जुनीयस्य भाषाटीकायां बद्रीनाथमिश्रस्य

600. चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो माद्यज्जटापल्लवो
दृप्यद्दारुणदन्दशूकमणिमांस्तत्पञ्चशाखालयः।
स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रव-
त्पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा।।

—भवभूतिकृतमालतीमाधवस्य टीकायां जगद्धरस्य

601. चन्द्रचूडं परं धाम चन्द्रिकाविमलच्छवि।
स्पन्दतां हृदि सन्तापसन्तानशमनाय वः।।

—सुबालावज्रतुण्डे श्रीरामस्य

602. चन्द्राननार्द्धदेहाय चन्द्रांशुसितमूर्त्तये।
चन्द्रार्कानलनेत्राय चन्द्रार्द्धशिरसे नमः।।

—कथासरित्सागरे अष्टमे लम्बके सोमदेवभट्टस्य

603. चान्द्रं च धाम सुरनिर्झरिणी जलं च
हस्तस्थहेमकलशामृतजीवनं च।
स्निग्धं च दृग्विलसितं हसितं सितं च
युष्माकमूष्मशमनाय भवन्तु शम्भोः।

—स्तुतिकु०

604. चापोत्क्षेपायसर्पद्वलयफणिगुणोतंसितापाङ्गभित्ति-
प्रत्यालीढानुबन्धोच्छलितजलनिधिव्याप्तवेलोपकण्ठम्।
उन्मीलद्भालवह्निक्रमशिथिलजटालम्बिगङ्गेन्दुलेखं
भूयाद्वश्चन्द्रमौलेर्मयनगरभिदः सौष्ठवं मङ्गलाय।।

—सदुक्ति० जलचन्द्रस्य

605. चिदाकाशमये स्वाङ्गे विश्वालेख्यविधायिने।
सर्वाद्भुतोद्भवभुवे नमो विषमचक्षुषे।।

—शिवदृष्ट्यां सोमानन्दस्य

606. चिद्घन एको व्यापी नित्यः सततोदितः प्रभुश्शान्तः।
जयति जगदेकबीजं सर्वानुग्राहकश्शम्भुः।।

—तत्त्वप्रकाशे भोजस्य

607. चिन्ताचक्रिणि हन्त चक्रिणि भिया कुब्जासनेब्जासने
नश्यद्धामनि तिग्मधामनि धृताशङ्के शशाङ्के भृशम्।
भ्रश्यच्चेतसि च प्रचेतसि शुचा तान्ते कृतान्ते च यो
व्यग्रोभूत्कटुकालकूटकवलीकाराय पायात्स वः।।

—सुभा०

608. चूडाभस्मकणाङ्कितावव जटापत्राञ्चलेनामृशन्
नेत्राग्निद्युतितापितावविव करैः सिञ्चन् सुधादीधितेः।
नागश्वासकलाङ्कितावविव मुहुर्गङ्गाजलैः क्षालयन्
मानिन्याश्चरणौ गिरीन्द्रदुहितुर्भूत्यै गिरीशोऽस्तु वः।।

—सूक्तिमु० उमापतिधरस्य

609. चूडामणीकृतविधुर्वलयीकृतवासुकिः।
भवो भवतु भव्याय लीलाताण्डवपण्डितः।।

—सिद्धान्तमुक्तावल्यां विश्वनाथपञ्चाननभट्टाचार्यस्य

610. चूडालमिन्दुकलया कलयामि यामि
यामिन्यधीशनयनं जयिनं पुरां च।
मन्दाकिनीचटुलतुङ्गतरङ्गसङ्ग-
त्वङ्गज्जटालमनिशं शरणं गिरीशम्।।

—धर्मसूरिकृतसाहित्यरत्नाकरस्य टीकायां
नौकाख्यायां वेङ्कटसूरिणः

611. चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो
लीलादग्धविलोलकामशलभः श्रेयो दशाग्रे स्फुरन्।
अन्तःस्फूर्ज्जदपारमोहतिमिरप्राग्भारमुच्छेदयं-
श्चेतः सद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः।।

—वैराग्यशतके भर्त्तृहरेः

612. चेतश्चक्रेऽखिलज्ञानव्याप्तिसामर्थ्यधारिणा।
नमो विनिर्मितानन्तभवध्वंसाय शम्भवे।।

—नीतिसारे कामन्दकेः

613. जगत्त्रितयवैचित्र्यचित्रकर्मविधायिनम्।
शिवं शक्तिपरिस्पन्दमात्रोपकरणं नुमः।।

—वक्रोक्तिजीविते कुन्तकस्य

614. जटाजूटलसद्गाङ्गजलभूषितमस्तकम्।
पुनातु गिरिजाप्रेमपात्रमेकमनेकधा।।

—सिद्धान्तमञ्जर्यां श्रीकण्ठदीक्षितस्य

615. जटाजूटे गङ्गा प्रवहति तरङ्गैस्तरलिता
छटायस्या दिव्या विलसति ललाटे शशिकला।
प्रभा सर्वाङ्गानां धवलयति विश्वं परिगता
गिरीशं तं वन्दे सकलसुखराशिं शिवकरम्।।

—रसेन्द्रचूडामणेष्टीकायां सिद्धिप्रदाख्यायां

616. जटाधरः खण्डशशाङ्कशेखरः
कपालमालः सितभस्मधूसरः।
स्फुरन्महापन्नगबद्धकङ्कणः
सदाशिवं वो विदधातु शङ्करः।।

—छोटी—ड्योरी—प्रस्तराभिलेखे शङ्करगणस्य

617. जन्मादि यस्माज्जगतस्ततो यं वदन्ति वेदान्तविदोऽधिकं ते।
परं परब्रह्मपदाभिधेयं वन्दे शिवं दैवतमिन्दुमौलिम्।।

—रामचन्द्रविजये वेंकटकृष्णस्य

618. जयति गिरिसुतायाः कामसन्तापवाहि-
न्युरसि रसनिषेकश्चान्दनश्चन्द्रमौलिः।
तदनु च विजयन्ते कीर्त्तिभाजां कवीना
मसकृदमृतबिन्दुस्यन्दिनो वाग्विलासाः।।

—नलचम्प्वां त्रिविक्रमभट्टस्य

619. जयति गिरिसुतास्तनावमर्दप्रविरलभस्मविराजिपीनवक्षाः।
स्वशरहुतवहे हुतासुरश्रीः पितृवनरङ्गमहानटस्त्रिनेत्रः।।

—वीणावासवदत्ते

—वीणावासवदत्ते

620. जयति च गिरिजाकपोलबिम्बा-
दधिगतपत्रविचित्रितांसभित्तिः।
त्रिपुरविजयिनः प्रियोपरोधा-
द्धृतमदनाभयदानशासनेव।।

—द्योली—अभिलेखे कृष्णस्य तृतीयस्य

621. जयति जगदेकहेतुः शशाङ्कमौलिस्त्रिलोचनः शर्वः।
सकलसुरासुरवन्दितचरणयुगः शङ्करः सकलः।।

—सङ्ग्रामविजयोदये

622. जयति जटाधरमौलिर्मन्दाकिनीपूरितमहामुकुटेशः।
गिरितनयार्पितभागो गुणगणरहितो विभुर्व्यापी।।

—गुडिमल्लम् पत्राभिलेखे बाणराजस्य

623. जयति ध्रुवबालेन्दुजटामुकुटमण्डनः।
अनाद्यनिधनश्शम्भुर्विश्वेषाञ्जगतां पतिः।।

—संगोली—अभिलेखे हरिवर्मणः

624. जयति प्रियापदान्ते गरलग्रैवेयकः स्मरारातिः।
विषमविशिखो विशन्निव शरणं गलबद्धकरवालः।।

—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

625. जयति भगवान् स रुद्रः
कोपादथवाप्यनुग्रहाद्येन।
स्त्रीणां विलासमूर्त्तिः
कान्ततरवपुः कृतः कामः।।

—पद्मप्राभृतके शूद्रकस्य

626. जयति भुवनजन्मस्थानसंहारहेतुः
जननिधनशून्यं शाम्भवं धाम शान्तम्।
स्फुरति निरवशेषं वस्तु यत्रास्तमोहं
करकमलतलान्तःस्थायिधात्रीफलाभम्।।

—भासर्वज्ञकृतन्यायसारस्य टीकायां न्यायमुक्तावल्याख्यायाम्
अपरार्थमहाराजस्य

627. जयति विश्वदेव-संघातनिचितैकमूर्त्तिस्सनातनः
स्थाणुरिन्दुरश्मिविच्छुरितद्युतिमज्जटाभारमण्डनः।
तमनुभूसुराद्विजप्रवरास्सामग्र्यजुर्वेदवादिनः
यत्प्रसादस्त्रायते नित्यं भुवनत्रयं पापमानो भयात्।।

—तलगुण्ड —अभिलेखे काकुस्थवर्मणः

628. जयति वृषेशो देवो लालाटनयनाग्निनिपतितानङ्गः।
असुरपुरारी रुद्रो जगदुदयलयंकरो भीमः।।

—गुडिमल्लम्—पत्राभिलेखे बाणराजस्य

629. जयति सकलशब्दग्रामनिर्माणकल्यः
प्रणतजननिकायध्वस्तसंसारशल्यः।
पशुपतिरनुरुद्धाशेषदेवादिपाल्यः
प्रियतमहिमभूभृद्मल्लिकामोदमाल्यः।।

—लखनऊ—सङ्ग्रहालयस्थपत्राभिलेखे कीर्त्तिपालस्य

630. जयति स कामाङ्गदहनो मस्तकन्यस्तमुग्धेन्दुः।
कादितृणान्तस्येशो यो गुप्त्युत्पत्तिलयहेतुः।।

—गुडिमल्म्— पत्राभिलेखे कीर्त्तिपालस्य

631. जयति स भगवान् शम्भुर्भुवनोदयलालनप्रलयलीलः।
गिरिजातपः फलं किल येन शरीरार्द्धमपि दत्तम्।।

—पुराणपारिजाते

632. जयति स सर्वव्यापी यत्कृतपरिणद्धकन्धरामध्ये।
गलभूषणाहिभोगप्रतिबिम्बमिव सुरदहनविषम्।।
—गुडिमल्लम् पत्राभिलेखे विक्रमादित्यस्य द्वितीयस्य

633. जयति सुरासुरसिद्धविद्याधरमौलिघृष्टचरणाब्जः।
शशिमणिमयूखभासितपिङ्गजटाभासुरो गिरिशः।।
—हिन्डोला —अभिलेखे कुलस्तम्भस्य

634. जिज्ञासा यस्य मुक्त्यै श्रुतिरपि विमला यस्य निःश्वासरूपा
यस्माद्भूतान्यभूवन् श्रुतिरपि सकलायत्स्वरूपे समाप्ता।
यच्छक्तिर्लोककर्त्री स्थितिविलयकरीभानुमद्भानुरूपा
चन्द्रज्योत्स्नेव भिन्ना न भवति स शिवः पातु देव्या समेतः।।
—शक्तितत्त्वविमर्शिनीटीकायां नीलकण्ठस्य

635. जिष्णुना जिष्णुना लोकान् विष्णुना प्रभविष्णुना।
ब्रह्मणा ब्रह्मणाऽद्येन स्तुताय स्वामिने नमः।
—स्तुतिकु०

636. जीर्णेऽप्युत्कटकालकूटगरले प्लुष्टे तथा मन्मथे
नीते भासुरभालनेत्रतनुतां कल्पान्तदावानले।
यः शक्त्या समलङ्कृतोऽपि शशिनः शैलात्मजां
स्वर्धुनीं धत्ते कौतुकराजनीतिनिपुणः पायात्स वः शङ्करः।।
—सुभा० सुधा० भा०

637. जूटे कपालशकलानि कलानिधिश्च
हस्ते सुधाम्बुसरलं गरलं गले च।
शक्रादिभिश्च नमनं गमनं गवा च
यस्यास्तु दुर्गतिहरः स हरः सदा वः।।
—स्तुतिकु०

638. ज्ञानानन्दमयं शुद्धं हरणोत्पत्तिकारणम्।
पाशविच्छेदकं वन्दे पशूनां पतिमव्ययम्।।

—शिवतत्त्वविवेके

639. ज्वलदनलगलत्कपालचन्द्र-
द्रवदमृतोत्सवसम्भ्रमोत्सवाय।
परहितपिहितान्तरालरोह-
त्तपनपथाय नमो नमः शिवाय।।

—लोकप्रकाशे क्षेमेन्द्रस्य

640. ज्वाला जातु करालतां न दधतां भाले कृशानोरिति
स्वर्गङ्गा विहिता कदर्पनिलया प्रागेव येन स्वयम्।
क्ष्वेडत्रासहृते सुधाकरकलामूर्द्ध्नाऽर्चिता येन च
प्राज्ञेऽसौ भवभीतिशान्तिविधये भूयात् पिनाकी शिवः।।

—सुभा० सुधा० भा०

641. तद्ज्वालानलशान्तये सुरधुनी तत्कालकूटोल्लस-
ज्ज्वालाजालविधूतयेऽमृतकरस्तत्कामशुद्ध्यै प्रिया।
तत्सर्पोद्धतदर्पसर्पणविधौ यस्मिन् मयूराः सदा
संसाराखिलशङ्कराय विभवे तस्मै नमः शम्भवे।।

—मेघदूतस्य टीकायां रसदीपिनीत्याख्यायां जगद्धरस्य

642. तरुणाम्बुजाभचरणाम्बुजद्वयप्रवणानतस्स करुणाम्बुवारिधिः।
शरणं ममास्तु तरुणेन्दुसुन्दरः फणिसार्वभौमधरणीश्वरो विभुः।।

—चम्पूभारतविवृत्यां कुमारतातार्यस्य

643. तस्मै दिशे सततमञ्जलिरेष पौष्पः
प्रक्षिप्यते मुखरितो मधुरैर्द्विरेफैः।
जागर्ति यत्र भगवान् गुरुचक्रवर्ती
विश्वोदयप्रलयनाटकसूत्रधारः।।

—नागभट्टकृत— त्रिपुरासारसमुच्चयस्य टीकायां
पदार्थादर्शाख्यायां श्रीलगोविन्दशर्मणः

644. तादृक्सप्तसमुद्रमुदितमहीभूभृद्भिरभ्रंकषै-
स्तावद्भिः परिवारिता दिशि पृथुद्वीपैः समन्तादियम्।
यस्य स्फारफणामणौ निलयनात् तिर्यक्कलङ्काकृतिः
शेषः सोप्यगमद्यदङ्गदपदं तस्मै नमः शम्भवे।।

—सदुक्ति० बल्लणस्य

645. तापत्रयापहृतये त्रिशिखं त्रिवर्ग-
सिद्ध्यै त्रिधामलयनं नयनत्रयं च।
त्रिस्रोतसोऽपि सलिलं त्रिमलापनुत्यै
भूयात् त्रिलोकमहितं त्रिपुरद्विषो वः।।

—स्तुतिकु०

646. तारानाथकलाधरस्त्रिजगतां नाथस्त्रयीविग्रहः
कारुण्यैकनिधिर्विधीन्द्रसुमुखैर्देवार्षसिद्धैर्नुतः।
वामाङ्कस्थितशैलजाङ्कप्रहितं विघ्नाधिपं लालयन्
सानन्दः शुभदः सदास्तु भगवान् प्रारिप्सितेऽस्मिन् शिवः।।

—गङ्गाधरसरस्वतीकृत—वेदान्तसिद्धान्तसूक्तिमञ्जर्याष्टीकायां
सोपज्ञप्रकाशाख्यायाम्

647. तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारककन्धराय गिरिजासङ्गैकभृङ्गारिणे।
नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे
नागैः कङ्कणिने नगेन गृहिणे नाथाय नित्यं नतिः।।

—सुभा०सुधा० भा०

648. तुष्टेन येन देहार्द्धमप्युमायै समर्पितम्।
स वो ददात्वभिमतं वरदः पार्वतीपतिः।।

—कथासरित्सागरे सोमभट्टस्य

649. त्राता भीतिभृतां पतिश्चिदचितां क्लेशं सतां शंसतां
हन्ता भक्तिमतां मतां स्वसमतां कर्ताऽपकर्ताऽसताम्।
देवः सेवकभुक्तिमुक्तिघटनाभूर्भूर्भुवः स्वस्त्रयी-
निर्माणस्थितिसंहृतिप्रकटितक्रीडो मृडः पातु वः।।

—स्तुतिकु०

650. त्रिविधान्यपि दुःखानि यदनुस्मरणान्नृणाम्।
प्रयान्ति सद्यो विलयंतं तं स्तुमः शिवमव्ययम्।।

—राजमार्तण्डाभिधानायां पातञ्जलयोगशास्त्रवृत्तौ भोजराजदेवस्य

651. त्रैलोक्यप्रथितोरुकीर्त्तिरनिशं संप्राप्तकामोऽपि यो
लोकानुग्रहकाङ्क्षया ननु तपश्चक्रेऽति गाढं पुरा।
कान्तं यं विषमाक्षमप्यतिमुदा संसेवते शैलजा
कल्याणं कुरुतात् स वोऽनवरतं सोमार्द्धधारी शिवः।।

—सुकन्याच्यवने चाङ्गुलिसुब्बरायभट्टस्य

652. त्रैलोक्यं संसृजति भगवान् लब्धमाहात्म्यतेजाः
चिन्तागम्यः परमतपसां योगिनां ध्यायतां यः।
अप्रत्यक्षं भवति विबुधानामपि प्रायशोऽसौ
देवः सोयं यदुपतिपतेः शङ्करः शं करोतु।।

—अस्वि—पत्राभिलेखे यादवस्य ऐरमदेवस्य

653. त्वङ्गत्तुङ्गभुजङ्गसङ्गगहनप्रत्युद्यदङ्गद्युति-
भ्रश्यद्विश्वदिगन्तरालबहुलप्रौढान्धकाराङ्कुरः।
सोमकलाकलापकलितो लावण्यकारुण्यभू-
र्भूयान्नो निरवद्यबोधविषये देवो भवानीपतिः।।

—सुरेश्वराचार्यकृत—बृहदारण्यकोपनिषद्भाष्यवार्तिकस्य टीकायां
शास्त्रप्रकाशिकाख्यायां आनन्दगिरेः

654. दक्षिणोरुनिहितं पदाम्बुजं वेदबोधितमिदं परं पदम्।
मुद्रयेति विबुधान् विबोधयन् पाटवं दिशतु मे धियः शिवः।।

—समरपुङ्गवकृत—अद्वैतविद्यातिलकस्य टीकायां
दर्पणाख्यायां धर्म्मय्यदीक्षितस्य

655. दरमुकुलितनेत्रा स्मेरवक्त्राम्बुजश्री-
रुपगिरिपतिपुत्रि प्राप्तसान्द्रप्रमोदा।
मनसिजमयभावैर्भावितध्यानमुद्रा
वितरतु रुचितं वः शाम्भवी दम्भभङ्गिः।।

—रुक्मिणीहरण— ईहामृगे वत्सराजस्य

656. दशादिक्कालाद्यैरकलितचिदालोकवपुषः
सदा तादृक्स्वात्मानुभवितृतया विस्फुरति यः।
निजो धर्मः शम्भोरनुपमचमत्कारसरसः
परं शाक्तं तत्त्वं जगति जयति स्पन्द इति तत्।।

—स्पन्दकारिकावृत्तौ रामकण्ठाचार्यस्य

657. दानाम्बुनिर्भरकरस्तनयः स यस्य
श्रीमान् स यस्य धनदः सविधे विधेयः।
यः संश्रितः शिरसि मुक्तकरेण राज्ञा
पुष्णातु वः कनकवर्षधनः स देवः।।

—स्तुतिकु०

658. दिगम्बरनितम्बिन्याः किमम्बरविभूषणम्।
इत्थं वरहरः पायात् परीरम्भपरः परः।।

—सुभा० सुधा० भा०

659. दिश्यात्स शीतकिरणाभरणः शिवं वो
यस्योत्तमाङ्गभुवि विस्फुरदूर्मिपक्षा।
हंसीव निर्मलशशाङ्ककलामृणाल-
कन्दार्थिनी सुरसरिन्नभसः पपात।।

—सुभा०

660. दिष्ट्यासौ जगदीश्वरोऽभिलषितो लब्धः स्वयं वत्सये-
त्याश्वस्तेन महीभृता सकुतुकं मेनासखेनादृतः।
प्रेमप्रेरितया त्रपानिभृतया देव्यादरापाङ्गितः
संरोहत्पुलकः शिवो घटयतां भद्राणि वैवाहिकः।।

—अद्भुतपञ्जरे नारायणदीक्षितस्य

661. दीप्यन्मूर्द्धेन्दुखण्डः शितशिखनखरच्छिन्नलोकेशमुण्डः
कम्राकारोरुदण्डःप्रलयहुतवहप्रस्फुरद्बाहुदण्डः।
चण्डीष्टोद्योतशौण्डः स्वभुजनियमिताखण्डवाणीधवाण्डः
खण्डीभूतारिखण्डः कलयतु भगवान् शर्म शम्भुः प्रचण्डः।।

—शिवकेशादिपादान्तवर्णने शङ्कराचार्यस्य

662. दूरोन्मुक्तखगेश्वरे मुरभिदि व्याक्षिप्तबाहौ ग्रह-
व्यूहे वारितमातरिश्वनि नमत्याशापतीनां गणे।
निष्कम्पोरगहारवल्लिरचलच्चूडेन्दुरव्याकुल-
स्वः सिन्धुः स्थिरयोगनिर्वृतमनाः पायात् त्रिलोकीं शिवः।।

—सदुक्ति० वैद्यगदाधरस्य

663. दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः
शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन।
आकृष्यास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः
सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान्।।

—वेणीसंहारे भट्टनारायणस्य

664. देवेन्द्रध्यानपारं शरणगतजनानन्दसन्दोहकारं
सारं संसारभाजामिहबहुकरुणापारपापाब्धितारम्।
नानासद्रत्नहारं हिमगिरितनयासङ्गगङ्गाविहारं
वन्दे नागेन्द्रहारं सकलसुजगदाधारसारं सदारम्।।

—शिवभक्तिरङ्गिण्यां वनमालिमैथिलस्य

665. देवो भवः स भवतां भवताद्विभूत्यै
यस्यावहन्त्यसितभूषणभोगिभोगः।
नेत्रानलाकलितकालकलेवरोत्थ-
पर्यत्सुधूमपटलीवलनाविनोदम्।।

—वृहत्कथामञ्जर्यां षष्ठलम्बके क्षेमेन्द्रस्य

666. देवः सदा समुदिताद्भुतभूतिसम्पत्-
सम्पादयत्वभिमतं भवतां स यस्य।
स्वः सिन्धुसङ्गतजटे शिरसीन्दुलेखा
नव्याङ्कुरश्रियमनारतमातनोतु।।

—करनबेल —प्रस्तराभिलेखे जयसिंहदेवस्य

667. देवः स पातु भुवनत्रयसूत्रधार-
स्त्वां बालचन्द्रकलिकाङ्कितजूटकोटिः।
एतत् समग्रमपि कारणमन्तरेण
कात्स्न्यार्दसूत्रितमसूत्र्यत येन विश्वम्।।

—समराङ्गणसूत्रधारे भोजदेवस्य

668. देहार्द्धधृतकान्तोऽपि तपस्वी निर्गुणोऽपि यः।
जगत्स्तुत्यो नमस्तस्मै चित्ररूपाय शम्भवे।।

—कथासरित्सागरे सप्तदशलम्बे सोमदेवभट्टस्य

669. देहार्द्धानद्धकान्ताकचकुसुमचयो भालनेत्रानलार्चिः
पीतोष्मामौलिखेलन्मुखरसुरनदीवीररम्यो जगन्ति।
स्फीतोत्तंसेन्दुकान्तिर्द्विरददृतिदृढाच्छादनव्यक्तशीतः
शम्भुर्भूषास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्तुमूर्त्तिः।।

—सुभा० सुधा० भा०

670. द्वारेशा नवरन्ध्रगा हृदयगो वास्तुर्गणेशो मनः
शब्दाद्या गुरवः समीरदशकं त्वाधारशक्त्यात्मकम्।

चिद्देवोऽथ विमर्शशक्तिसहितः षाड्गुण्यमङ्गावलि-
र्लोकेशाः करणानि यस्य महिमा तं नेत्रनाथं स्तुमः।।

—श्रीनेत्रतन्त्रस्य टीकायां क्षेमराजस्य

671. द्विजेन्द्रकोटीरमजेन्द्रवन्द्यम्
भुजङ्गभूषाङ्गमजिह्मवृत्तम्।
गुणाधिकं सर्वगणाधिनाथम्
प्रणौमि शम्भुं प्रणवाभिधेयम्।।

—कविकर्णरसायने षडक्षरीशस्य

672. द्विरदवदनमङ्के संदधानां गुहं च
क्षितिधरवरकन्यां संदधानं निजाङ्के।
शशिनिभमिभकृत्तिञ्छादयन्तं जटालं
त्रिदृशमुरगभूषं शम्भुमीशानमीडे।।

—मदनमुखचपेटिकायां लक्ष्मीनारायणशर्मणः

673. धारितं येन गङ्गायाः शृङ्गोच्चं पतनाद्भुवि।
जटाविटपसंस्थेन स हरः पातु वो जनान्।।

—सीरपुर—गन्धेश्वर—मन्दिराभिलेखे

674. धिया वचोभिः शिरसा च नित्यं
नमामि शम्भुं भवमुत्तरीतुम्।
विशुद्धदेहं प्रकृतेः परं तं
भवादि भूतं विरजं विराजम्।।

—अङ्कतन्त्रस्य टीकायां हर्षस्य

675. धृतगगनसिन्धुपट्टः शैलसुताशालभञ्जिकासुभगः।
जयति जगत्रयमण्डपमूलस्तम्भो महादेवः।।

—पनहेर—अभिलेखे

676. धृतनिधनधनुः प्रचण्ड चण्डीमुखकमलभ्रमरामराधिनाथ।
हर रणरणकान्त कान्तमूर्त्ते गगनदुकूल विकूलयापदं नः।।

—सदुक्ति० सञ्चाधरस्य

677. ध्यानालंकृतलोचनो गिरिसुतावक्त्रे ततः सोत्सुकः
किन्तन्मे तपसीति चञ्चलमना आकृष्टचापे स्मरे।
भ्रूभङ्गाकुलभीषणो दृगनलप्रव्यक्तभीमो हते
प्रोद्धासो रतिशोकसाश्रुवदनः शम्भुश्चिरं पातु वः।।

—रामाङ्कनाटिकायां धर्मगुप्तस्य

678. नमश्शिवाय कन्दर्पदर्पहारिदृगग्नये।
गिरीन्द्रतनयासक्तमानसायेन्दुमौलये।।

—पर्यायपदावल्यां वासुदेवस्य

679. नमस्तमस्वतीकान्तखण्डमण्डितमौलये।
तापान्धकारनिर्वेदखेदविच्छेदवेदिने।।

—स्तुतिकु०

680. नमस्तमः पराभूतभूतवर्गानुकम्पिने।
श्वेतभानुवृहद्भानुभानुभासितचक्षुषे।।

—स्तुतिकु०

681. नमस्तस्मै कस्मैचन वचनचित्तेन्द्रिययमी
यमीशानं ज्योतिर्मयमयमुपास्ते मुनिजनः।
गुरुप्रज्ञप्रज्ञामुकुरनिकुरम्बप्रतिफल-
न्निजानन्दज्योत्स्नाभ्युदयभिदुराज्ञानतिमिरः।।

—सदुक्ति०

682. नमस्तस्मै महेशाय यस्य सन्ध्यात्रयच्छलात्।
यातायातं प्रकुर्वन्ति त्रिजगत्पतयोऽनिशम्।।

—स्कन्दपुराणेकाशीखण्डे

683. नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे।।

—हर्षचरितसारे बाणभट्टस्य

684. नमस्तुभ्यं देवासुरमकुटमाणिक्यकिरण-
प्रणालीसम्भेदस्नपितचरणाय स्मरजिते।
महाकल्पस्वाहाकृतभुवनचक्रेऽपि नयने
निरोद्धुं भूयस्तत्प्रसवमिव कामं हुतवते।।

—सूक्तिमु० मुरारेः

685. नमस्ते विश्वनाथाय संसारस्थितिहेतवे।
जगतां रूपिणे तुभ्यं जन्तूनां परमात्मने।।

—शिवरात्रिव्रतकथायाम्

686. नमस्त्रिभुवनोत्पत्तिस्थितिसंहारकारिणे।
निर्वाणप्रापणस्यैकहेतवे वृषकेतवे।।

—न्यायसूत्रतात्पर्यदीपिकायां भट्टवागीश्वरस्य

687. नमस्यामो दूरीकृतभुवनभङ्गं भगवतो
वपुर्विश्वारम्भस्थितिलयनिदानं पुररिपोः।
यदस्पृष्टं भोगैरपि दलितकामं करुणया
भवानीभ्रूभङ्गप्रणयकलहेभ्यः स्पृहयति।।

—रससारे भट्टवादीन्द्रस्य

688. नमस्ये मानौघैः प्रमितममितं स्थाणुमनिशं
समस्तज्ञं लोकत्रितयनयनं सत्रिनयनम्।

सकालं कालारिं सकलवपुषं निष्कलमुमा-
सहायं कामारिं भवमभयमीशं पशुपतिम्।।

—प्रत्यक्तत्त्वदीपिकायाम्

689. नमो जन्मजरामृत्युभीतिसातङ्कपालिने।
करुणामृतसम्पर्कपेशलाय कपालिने।।

—स्तुतिकु०

690. नमो दिव्याङ्गरागाय नमोदिव्याङ्गरूपिणे।
नमः शिवाय शान्ताय शङ्कराय हराय च।।

—शिवरात्रिव्रतकथायां

691. नमो नमस्तेऽमृतभानुमौलये
नमो नमस्तेऽमृतसिद्धिदायिने।
नमो नमस्तेऽमृतकुम्भपाणये
नमो नमस्तेऽमृतभैरवात्मने।।

—स्तुतिकु०

692. नमो निसर्गनिर्विघ्नप्रसादामृतसिन्धवे।
संसारमरुसन्तापतापितापन्नबन्धवे।।

—स्तुतिकु०

693. नमोब्रह्महरित्र्यक्षश्रवसे भवसेतवे।
जगत्सर्गस्थितिह्रासहेतवे वृषकेतवे।।

—स्तुतिकु०

694. नमो वाङ्मनसातीतमहिम्ने परमेष्ठिने।
त्रिगुणाष्टगुणानन्तगुणनिर्गुणमूर्त्तये।।

—स्तुतिकु०

695. नमोऽस्तु भावनामात्रनानावर्णविधायिने।
त्र्यक्षचित्रकृते लक्ष्यत्रैलोक्याश्चर्यकारिणे।।

—वृहत्कथामञ्जर्यां चतुर्दशलम्बके क्षेमेन्द्रस्य

696. नमः कण्ठोल्लसत्कांतिकंजपल्लवशायिने।
जगन्नगरनिर्माणकुम्भकाराय शम्भवे।।

—योगशतकस्य वैद्यवल्लभाख्यायां टीकायां रुपनयनस्य

697. नमः कन्दर्पदर्पघ्नज्वलज्ज्वलनचक्षुषे।
लसद्गिरिसुतासक्तवपुषे चन्द्रमौलये।।

—अवन्तिसुन्दरीकथासारे

698. नमः कर्पूरगौराय कैलाशाचलवासिने।
गौरीकण्ठग्रहानन्दनिष्पन्दायान्धकद्विषे।।

—बगलापद्धत्याम्

699. नमः शमनहुङ्कारकातरातुरहर्षिणे।
भवाय भवदावाग्निविविग्नामृतवर्षिणे।।

—स्तुतिकु०

700. नमः शाश्वतिकानन्दज्ञानैश्वर्यमयात्मने।
सङ्कल्पसफलब्रह्मस्तम्भारम्भाय शम्भवे।।

—न्यायमञ्जर्यां जयन्तभट्टस्य

701. नमः शिवाय निःशेषक्लेशप्रशमशालिने।
त्रिगुणग्रन्थिदुर्भेदभवभेदविभेदिने।।

—स्तुतिकु०

702. नमः शिवाय सततं पञ्चकृत्यविधायिने।
चिदानन्दघनस्वात्मपरमार्थावभासिने।।

—प्रत्यभिज्ञाहृदये क्षेमराजस्य

703. नमः शिवाय संसारसरोजस्य रजस्विनः।
विकासनैकसूर्याय सङ्कोचसकलेन्दवे।।

—प्रचण्डपाण्डवे राजशेखरस्य

704. नमः सकलसंसारसागरोत्तरहेतवे।
तमो गर्ताभिसम्पातहस्तालम्बाय शम्भवे।।

—कनस्व—अभिलेखे शिवगणस्य

705. नमः समदकन्दर्पदर्पज्वरभरच्छिदे।
दुर्वारभवरुग्भङ्गभिषजे वृषलक्ष्मणे।।

—स्तुतिकु०

706. नमः समस्तगीर्वाणकिरीटघटिताङ्घ्रये।
जगन्नगरनिर्माणनर्मशर्मदकर्मणे।।

—स्तुतिकु०

707. नमः समस्तसङ्कल्पकल्पनाकल्पशाखिने।
विकासिकलिकाकान्तकलापाय स्वयम्भुवे।।

—स्तुतिकु०

708. नमः समुत्पादिततारकद्विषे
नमस्त्रिधामाश्रिततारकत्विषे।
नमो जगत्तारकपुण्यकर्मणे
नमो नमस्तारकराजमौलये।।

—स्तुतिकु०

709. नमः सान्द्रामृतस्यन्दिघनध्वनितशोभिने।
महाकालाय भीष्मोष्मभवग्रीष्मक्लमच्छिदे।।

—स्तुतिकु०

710. नमः सोमार्द्धदेहाय सोमार्द्धकृतमौलये।
श्वेताभयसमुद्धूतश्वेताभयशसे नमः।।

—स्तुतिकु०

711. नमः संहृतकालाय कालायसगलत्विषे।
गङ्गाधौतकलापाय कलापायमविन्दते।।

—स्तुतिकु०

712. नाडीचक्रोदरस्थ क्षिति-जल-दहनस्पर्शनाकाशधामो
सर्वात्मा सर्वशक्तिः शशि- तरणिगतिर्विश्वमूर्त्तिः पुराणः।
योऽसौ देवातिदेवो विचरति भगवान् देहिनां देहमध्ये
आद्यो हंसाभिधानो स जयति जगतां प्राणभूतो महेशः।।

—अङ्गुल—अभिलेखे शान्तिकरदेवस्य

713. निजपदलोकने सति नृणामितरैः सुकृतै-
रलमितिबोधमादधदिवाभयमुद्रिकया।
कनकसभावभासिकरवैपुरवैरिमहः
स्थिरभवरोगहानिकरुणाभरणं शरणम्।।

—शैवकर्णामृतसिद्धान्ते अप्पयदीक्षितस्य

714. निजाङ्गभङ्गभङ्ग्याऽपि भक्तानुग्रहकारिणे।
नमः स्तस्भितजम्भारिभुजस्तम्भाय शम्भवे।।

—स्तुतिकु०

715. निजार्द्धहृतशङ्करं सकलदैत्यनाशङ्करम्
जगत्त्रितयशङ्करं स्वजनचित्तनिशःङ्करम्।

ममाशु भजतः पुरन्धृतवसुन्धरान्तःपुरम्
करोतु निजंतःपुरं पशुपतेः सदान्तःपुरम्।।
—षड्‌ऋतुवर्णनकाव्ये व्रजराजदीक्षितस्य

716. नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमात्
व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत्।
शब्दब्रह्मयदूचिरेसुकृतिनश्चैतन्यमन्तर्गतम्
तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः।।
—शरदातिलके लक्ष्मणाचार्यस्य

717. नित्यं निरावृति निजानुभवैकमान-
मानन्दधाम जगदङ्कुरबीजमेकम्।
दिग्देशकालकलनादिसमस्तहस्त-
मर्दासहं दिशतु शर्म महन्महो नः।।
—स्तुतिकु०

718. नित्यं रसार्द्रहृदयेन्धनसम्प्रयुक्त-
दाक्षायणीविरहदारुणपावकस्य।
उद्भूतधूमकलिकामुपकण्ठमूलं
क्ष्वेलच्छलेन वहते महते नमोऽस्तु।।
—साहित्यरत्नाकरे धर्मसूरेः

719. निमित्तमन्तरेणापि यः सपङ्कजनाभये।
प्रवर्तते विभुस्तस्मै नमः पङ्कजनाभये।।
—स्तुतिकु०

720. निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्या शूलिने।।
—सुभा०सुधा०भा०

721. निर्मत्सरौ निवसतः सममर्कचन्द्रौ
नीरानलावमृतहालहलौ च यत्र।
राज्ञा नवेन तदधिष्ठितमुज्ज्वलेन
शार्वं वपुर्भवतु वाञ्छितसिद्धये वः।।

—स्तुतिकु०

722. निर्माता जगदर्थमेव वचसां वाचं यमो यः स्वयम्
भोगान् विश्वकृते तनोति विषयव्यावर्तितात्मेन्द्रियः।
धत्तेऽस्त्राणि जगन्ति रक्षितुमुदासीनः स्वदेहग्रहे
योगीन्द्रोऽस्तु सदाशिवः स भवतां भूत्यै परार्थव्रती।।

—सदुक्ति० वैद्यगदाधरस्य

723. निःशङ्कशङ्कर करग्रथिताहिभोग
भोगप्रद प्रदलितामरवैरिवृन्द।
वृन्दारकार्चित चिताभसिताङ्गराग
रागातिदूर दुरितापहर प्रसीद।।

—सदुक्ति० बाणस्य

724. निःसामान्याय मान्याय न्यायमार्गोपदेशिने।
मूर्द्धन्याय वदान्याय धन्याय स्वामिने नमः।।

—स्तुतिकु०

725. नीलस्निग्धगिरीन्द्रजालकलता सम्बन्धबन्धस्पृहः
शीतांशुद्युतिशुभ्रदंष्ट्रवदनः प्रोत्सर्पदुग्रध्वनिः।
लीलोदस्तकरप्रहारदमितोद्दामद्विपेन्द्रः श्रियं
दद्याद्वोऽग्निशिखापिशंगनयनश्चण्डीशपञ्चाननः।।

—राजमार्तण्डे

726. नेत्रस्थभास्वानपि यस्तमस्वान्
धृतद्वितीयोऽपि चिराद्वितीयः।

अनन्तभागोऽपि विहीनभोगः
शवोऽपि भूयात् स शिवः शिवो नः।।

—विश्वनाथकविराजकृत—साहित्यदर्पणस्य टीकायां
कुसुमप्रतिमाख्यायां हरिदाससिद्धान्तवागीशस्य

727. परात्परं पर्वतनन्दिनीपतिं प्राणेश्वरं पन्नगभूषिताङ्गम्।
विभूतिदं भूतभयप्रनाशनं तं शङ्करं शोकहरं नमामि।।

—रामार्णव

728. परं परस्थं गहनादनादिमेकं निविष्टं बहुधा गुहासु।
सर्वालयं सर्वचराचरस्थं त्वामेव शम्भुं शरणं प्रपद्ये।।

—परमार्थसारे अभिनवगुप्तस्य

729. पातु मां पार्वतीकान्तः पञ्चब्रह्मतनुः परः
ब्रह्माण्डानां पतिरिति प्रपदेन प्रकाशितः।
गुणरत्नाकरं साक्षाद्विष्णोरन्तर्व्यवस्थितम्
वन्देऽध्वरपतिं मूर्द्ध्ना वरेण्यं सवितुश्शिवम्।।

—श्रुतिसूक्तिमालायां हरदत्ताचार्यस्य

730. पादाघातविदीर्णभूमिविलसद्भोगीन्द्रचूडामणि-
ज्योत्स्नासुप्तहिरण्ययूपकलनात् कण्डूयमाने कटौ।
नागास्येस्खलितस्वकैर्विहसिते लज्जाविनम्रः स्मितं
नाट्याङ्गं कलयन् हिमांशुतिलकः पायादसौ धूर्जटिः।।

—हलायुधविजयनाटके

731. पापकूटमिवाम्भोधेः कालकूटं निपीय यः।
मृत्यो ररक्ष लोकाँस्त्रीन् महेशो वः स रक्षतु।।

—भूदेवचरिते

732. पायादालिङ्गिता युष्मान् कण्ठमेचकरोचिषा।
शम्भोर्भस्माङ्गरागस्यच्छायाकृष्णा तनुच्छविः।।

—सीरपुर—प्रस्तराभिलेखे शिवगुप्तस्य

733. पायाद्वश्शाङ्करी मूर्त्तिश्शशाङ्काङ्कुरशेखरा।
प्रतिपद्दिनपर्यन्ते सन्ध्येव सकलानता।।

—पुल्लुर—पत्राभिलेखे पल्लवमल्लस्य

734. पायाद्वस्त्रिगजद्गुरुः स्मरहरः सोपग्रहाणां शिरः
श्यामाकामुकमत्सरेण चरणौ पङ्क्तिर्ग्रहाणामिव।
यस्य प्रह्वसुरासुरेश्वरशिरोमन्दारमालागल-
त्किञ्जल्कोत्करपिञ्जरोन्मुखनखश्रेणीनिभेनाश्रिता।।

—स्तुतिकु०

735. पार्श्वस्थपृथ्वीधरराजकन्याप्रकोपविस्फूर्जितकातरस्य।
नमोऽस्तु ते मातरिति प्रणामाः शिवस्य सन्ध्याविषया जयन्ति।।

—विक्रमाङ्कदेवचरिते बिल्हणस्य

736. पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता।
तथापि भव ते मूर्तिरपवर्गानुसारिणी।।

—शा०प० देवेश्वरस्य

737. पीयूषेण विषेण तुल्यशमनं स्वर्गे श्मशाने स्थिति-
र्निर्भेदा पयसोऽनलस्य वहने यस्याविशेषग्रहः।
ऐश्वर्येण च भिक्षया च गमयन् कालं समः सर्वतो
देवः स्वात्मनि कौतुकी हरतु वः संसारपाशं हरः।।

—सदुक्ति० वैद्यगदाधरस्य

738. पुराणमजरं देवं कामदं कामवैरिणम्।
अनिदानं निदानं तं योगिनं भोगिनं नुमः।।

—अधिकरणकौमुद्यां देवनाथठक्कुरस्य

739. पुष्णातु वः प्रथमसङ्गमभीरुगौरी-
विस्रम्भणप्रणयभङ्गभयाकुलस्य।
तत्कालकार्यकरदर्पकदेहदाह-
जातानुतापमुरगाभरणस्य चेतः।।

—स्तुतिकु०

740. प्रकीर्णः कामारेरमरनिकरैरङ्घ्रियुगले
विलीनालिः कल्पद्रुमकुसुमपुष्पाञ्जलिरयम्।
विभूत्यै भूयाद्वः पितृविपिनभस्माङ्कितितनो-
र्निशानाथज्योत्स्नामिलितमुकुटस्येष्टफलदः।।

—भैरवानन्दनाटके मणिकवेः

741. प्रणमदमरमौलिप्रस्फुरद्रत्नरश्मि-
प्रकरविमलदीपैर्नित्यनीराजिताङ्घ्रिः।
शिशिरकिरणधारी योगिहृत्पद्मचारी
कृपयतुमपिसाम्बः कोऽपि संवित्कदम्बः।।

—रामानन्दसरस्वतीकृत—सिद्धान्तचन्द्रिकायाष्टीकायां
उद्वाराख्यायां गङ्गाधरयतेः

742. प्रणम्य जगदुत्पत्तिस्थितिसंहारकारणम्।
स्वर्गापवर्गयोर्द्वारं त्रैलोक्यशरणं शिवम्।।

—रुग्विनिश्चये माधवाचार्यस्य

743. प्रणम्य देवं शशिशेखरप्रियं
पिनाकिनं भस्मकणैर्विभूषितम्।

विभूतये भूतिमतां द्विजन्मनां
करोमि भूयः स्फुटवाचमुज्ज्वलाम्।।

—निधानपुर—ताम्रपत्राभिलेखे भास्करवर्मणः

744. प्रणयकुपितप्रियापदलाक्षासन्ध्यानुबन्धमधुरेन्दुः।
तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति।।

—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

745. प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मित-
स्त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत्।
नमितशिरसो गङ्गालोके तया चरणाहता-
ववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम्।।

—सुभा०सुधा०भा०

746. प्रणयकुपितां देवीं नत्वोत्थितः परिसान्त्वयन्
मुखमुपगतज्योत्स्नान्तस्मेरमित्युपगूहयन्।
नयनहुतभुक्छायारक्तेक्षणां परमेश्वरो
भयचकितधीर्दृष्ट्वा भूयो नमन्नवतात् स वः।।

—सुबालावज्रतुण्डे

747. प्रतिबिम्बतगौरीमुखविलोकनोत्कम्पशिथिलकरगलितः।
स्वेदभरपूर्यमाणः शम्भोः सलिलाञ्जलिर्जयति।।

—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

748. प्रत्यक्षवस्तुविषयाय जगद्धिताय
विश्वस्थितिप्रलयसम्भवकारणाय।
सर्वात्मने विजितकोपमनोभवाय
तुभ्यं नमः स्वभुवनप्रभवे शिवाय।।

—बङ्कपुर—अभिलेखे सोमेश्वरस्य प्रथमस्य

749. प्रदह्य मदनं क्रुधाऽपि च पुनर्जगच्छ्रेयसे
रणेऽसमबली षडाननसुतः समुत्पादितः।
निपीय विषमुल्वंणं वितरितञ्च येनाऽमृतम्
स एव मम सन्ततं भवतु शङ्करः शङ्करः।।

—श्रीधरीनाम्न्यां वृहद्दैवज्ञरञ्जन्यां टीकायां श्रीधरस्य

750. प्रदिशतु गिरिशः स्तिमितां ज्ञानदृशं वः श्रियं च गिरिशस्तिमिताम्।
प्रशमितपरमदमायं सन्तः संचिन्तयन्ति परमदमायम्।।

—युधिष्ठिरविजये वासुदेवस्य

751. प्रवेशा क्षेपनिष्कामप्रसादान्तरितं जगत्।
कृतं नाट्यायितं येन तं नमामि महानटम्।।

—भरतकोशे

752. प्राग्जन्मीयतपः फलं तनुभृतां प्राप्येत मानुष्यकम्
तच्च प्राप्तवता किमन्यदुचितं प्राप्तुं त्रिवर्गं विना।
तत्प्राप्तेरपि साधनं प्रथमतो देहो रुजावर्जित-
स्तेनारोग्यमभीप्सितं दिशतु वो देवः पशूनां पतिः।।

—जीवानन्दने आनन्दरायमखिनः

753. प्रालेयाचलभागधेयभवनं कल्याणजालास्पदम्
जाटाटीरतपः फलं किलकिलल्लीलाशुकाह्लादितम्।
बिभ्राणं परिमौलि कञ्चनसुधाधाराधरं सादरम्
यन्मे भद्रममुद्रमाकलयतामानन्दकन्दं महः।।

—भागवतचम्प्वां अभिनवकालिदासस्य

754. फणिश्वासश्यामे स्वनदमरनद्यम्भसि च य-
ज्जटाजूटाम्भोजे नयनशिखिविद्युद्विलसति।
तथा चूडाचन्द्रद्युतिनिकरधारेव ककुभं-
कपालानां माला तुलयति स शर्वो विजयते।।

—चन्द्रेह—अभिलेखे प्रबोधशिवस्य

755. फाललोचन भूतिभूषण भूतनाथ जगत्पते
भक्तवत्सल भुक्तिमुक्तिद भोगिभूषण पाहि माम्।
व्याघ्रपाद्पतञ्जलीडितपादपद्म सभापते
ताण्डवेश्वर देहि मे तव पादभक्तिमचञ्चलाम्।।

—ताण्डवेश्वराष्टके

756. बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत्संहारे हराय नमो नमः।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः।।

—महिम्नस्तोत्रे

757. बाणीभूतपुराणपूरुषधृतिप्रत्याशया धाविते
निद्रातीक्षणजाशुशुक्षणिकणक्लान्ते शकुन्तेश्वरे।
नम्रोन्नम्रभुजङ्गपुङ्गवगुणव्याकृष्टबाणासन-
क्षिप्तास्त्रस्य पुरद्रुहो विजयते सन्धानसीमाश्रमः।।

—सूक्तिमु० मुरारेः

758. बिभ्रच्चन्द्रविभावसूपरितटप्रोद्यच्छिरोमण्डलम्
श्रृङ्गं गाञ्च सरिन्मुखं सुरगणैः सिद्धैश्च संसेवितः।
पादाधः कृतभूधरान्तरशिरा रत्नौघभूतिस्थली
देहोद्भूतगुहो गुरुर्गमयतादर्थं गिरीशोऽद्य नः।।

—श्रीहर्षकृतरत्नावल्याष्टीकायाम्
विद्योतन्याख्यायां शिवनाथस्य

759. बिभ्रत्पाथः कपर्दे सुरनगरनदीमिन्दुलेखां ललाटे
नेत्रान्तः कालवह्निं गरलमपि गले व्याघ्रचर्माङ्गभागे।
पञ्चास्यो वै त्रिनेत्रो वृषभगतिरतिर्वामभागार्द्धवामः
संदिश्यात्संपदं वः सह सकलगुणैरद्भुताकार ईशः।।

—सुभा०सुधा०भा०

760. ब्रह्मादयो यस्य नपारमाप्नुवन्
गङ्गाद्भुतं मस्तकदेशवासिनी।
वामार्द्धदेहापि न चण्डिकाप यं
ध्यायामि देवं सनकादिवन्द्यम्।।

—परिभाषेन्दुशेखरकाशिकयां गदावृत्तौ महादेवसूनो—
वैद्यनाथपायगुण्डेभट्टस्य

761. ब्रह्माद्वयं परानन्दं धर्मादीनामगोचरम्।
कार्यकारणनिर्मुक्तं शिवं परमुपास्महे।।

—कण्ठवल्लीभाष्यटीकायां बालगोपालेन्द्रयतीश्वरस्य

762. भक्तेभ्यो भुवनाधिपत्यवरदं देवैर्महेन्द्रादिभिः
सिद्धैश्चारणगुह्यकैर्मुनिगणैः प्रोद्दिष्टपादाम्बुजम्।
संसारभ्रमभीरुणा च मानसा ध्यायन्ति यं योगिनः
तं वन्दे शशिखण्डमण्डितजटाजूटं भवं धूर्जटिम्।।

—रत्नदीपिकायां चण्डेश्वरस्य

763. भक्त्या योगिमनस्तडागसुखमासंदोहवर्द्धयुत्तमं
गङ्गाम्भोमकरन्दबिन्दुनिकरं संसारदुःखापहम्।
यो मूर्त्तिम्बहुधाविधायभगवान् रक्षत्यशेषं जगत्
यत्पादार्चनतत्परानहि पुनर्मज्जन्ति विश्वार्णवे।।

—क्रियायोगसारे

764. भद्राय स्मितकौमुदीमधुरिमास्येन्दुं दधद्वासुके-
रालोकादिव लीयमानपवनादालीढनासापुटम्।
तेजः किञ्चिदमन्दसैन्धवमहः सन्दोहनिष्यन्दना-
वस्कन्दादिव जातनिद्रनयना नव्याम्बुजं जायताम्।।

—मथुरानिरुद्धनाटके चन्द्रशेखरराजगुरोः

765. भद्रं देवो विनिद्रं वितरतु करुणापूरपूर्णायताक्षो
मर्त्यामर्त्यातिसृष्टिस्थितिलयरचनागण्यलीलाविभूतिः।
सूनुर्यस्यातिवीरस्त्रिभुवनविजयी पुष्पबाणैर्मनोभू-
र्जायामेयप्रभावा वलजिदजमहेशानवन्द्याङ्घ्रिपद्मा।।

—वसन्तभूषणभाणे वरदार्यस्य

766. भवतु भवतिमिरभिदुरं तेजो रौद्रं प्रशान्तये जगतः।
परिवर्तते समग्रं कल्पान्तनिशावसाने यत्।।

—हावड़ाघाट—पत्राभिलेखे बलवर्मणः

767. भवभीतहरं सुरेश्वरं जगतां कारणकारणं परं।
अविमुक्त पुराधिवासिनं शिवमीडे प्रणतार्त्तिभंजनम्।।

—दानहीरावल्यां महादेवभट्टसूनोर्दिवाकरस्य

768. भव शिव शवभस्मगौर गौरीग्रथितशरीर सरीसृपोत्तरीय।
स्मरहर हर भीम भीमभूतप्रकरभयंकर शङ्कर प्रसीद।।

—सदुक्ति० सञ्चाधरस्य

769. भवानीभयभृद्भूभृद्भुजङ्गभुजभाभृतः।
भवतो भवतो भूयाद् भव्यं भव्यं भवे भवे।।

—उदयपुरस्थ— जगन्नाथराय—मंदिराभिलेखे

770. भवानीशमहं वन्दे भक्ताभीष्टप्रदं शिवम्।
भुजङ्गमाधिपैर्नित्यं भूषितं भुवनेश्वरम्।।

—तत्त्वचिन्तामण्यालोकव्याख्यायां जयदेवस्य

771. भस्मान्धोरगफूत्कृतिस्फुटभवद्भालस्थवैश्वानर
ज्वालास्विन्नसुधांशुमण्डलगलत्पीयूषधारारसैः।
संजीवद्गजचर्मगर्जितभयभ्राम्यद्वृषाकर्षणव्यासक्तः
सहसाद्रिजोपहसितो नग्नो हरः पातु वः।।

—सुभा० सुधा० भा०

772. भस्मोद्धूलितमूर्तिरिन्दुधवलज्योतीरसोर्वीधर-
स्कन्धासक्ततुषारगौरवृषभारूढोऽस्तु भद्राय वः।
देवो दुग्धमहाब्धिमध्यविकसत्सत्पुण्डरीकोपरि-
क्रीडद्बालमरालनिर्मलरुचिः कात्यायनीकामुकः।।

—स्तुतिकु०

773. भाले प्रालेयरश्मिं दधदतिरुचिरं शोभने कण्ठदेशे
तारं हारं फणीन्द्रैः फणमणिसुभगैर्निर्मितं दीप्तिमन्तम्।
वामां वामाङ्गदेशे नलिननिभमुखीमुन्मुखीमिष्टदाने
भक्तानां विश्ववन्द्यो भसितसिततनुः शं विधत्तां महेशः।।

—सिंहसिद्धान्तसिन्धौ शिवानन्दभट्टस्य

774. भाले यस्य कलानिधिर्मधुमिलद्भृङ्गावलीगण्डयोः
कण्ठेऽहिर्विलसत्यलं पदयुगे गीर्वाणचेतोगणाः।
ब्रह्मापि त्रिजगत्सिसृक्षुरभजन्निर्विघ्नसंसिद्धये
श्रीमन्मङ्गलमूर्त्तिमाद्यमलयं तं नौमि भक्तप्रियम्।।

—सिद्धान्तसुन्दरे नागनाथसूनोर्ज्ञानराजस्य

775. भावावेषवपुः क्रियागुणकृतानाश्रित्य भेदान् गतम्
भावावेशवशादनेकरसतां त्रैलोक्ययात्रामयम्।
नृत्तं निष्प्रतिबद्धबोधमहिमा यः प्रेक्षकश्च स्वयम्
स व्याप्तावनिभाजनं दिशतु वो दिव्यः कपाली यशः।।

—मत्तविलासप्रहसने महेन्द्रविक्रमवर्मणः

776. भिक्षुकोऽपि सकलेप्सितदाता प्रेतभूमिनिलयोऽपि पवित्रः।
भूतमित्रमपि योऽभयसत्री तं विचित्रचरितं शिवमीडे।।

—संस्कृतभाषाप्रदीपे सखारामरावजीशर्मणः

777. भिन्द्धि क्ष्माधरसन्धिबन्धमुदधेरम्भोभरं जृम्भय
क्षुन्द्धि क्ष्मापटलं दलत्फणिफणापीठीलुठत्सौष्ठवम्।
पिण्ड्ढि प्रौढचपेटपाटितरटत्ताराकुटुम्बं नभः
प्रारब्धोद्धतसान्ध्यताण्डव इति श्रीभैरवः पातु वः।।

—स्तुतिकु०

778. भीतिर्नास्ति भुजङ्गपुङ्गवविषात्प्रीतिर्न चन्द्रामृतान्
नाशौचं हि कपालदामलुलनाच्छौचं न गङ्गाजलात्।
नोद्वेगश्चितिभस्मना न च सुखं गौरीस्तनालिङ्गना-
दात्मारामतया हिताहितसमः स्वस्थो हरः पातु वः।।

—सुभा० सुधा० भा०

779. भुजगपतिविमुक्तस्वच्छनिर्मोकवल्ली-
विलसितमनुकुर्वन्यस्य गङ्गाप्रवाहः।
शिरसि सरसभास्वन्मालतीदामलक्ष्मीम्
घटयति हिमगौरः सोऽस्तु वः साध्यसिद्ध्यै।।

—हारावल्यां पुरुषोत्तमदेवस्य

780. भुजगाभुजगा यस्य वामगाः वामलोचना।
सर्वदः सर्वदा दिश्यात्स शिवः स शिवः शिवम्।।

—त्रिकाण्डमण्डनस्य टीकायां पदप्रकाशिकाख्यायाम्

781. भुजङ्गकुण्डलीव्यक्तशशिशुभ्रांशुशीतगुः।
जगन्त्यपि सदाऽपायादव्याच्चेतोहरः शिवः।।

—सुभा०सुधा०भा०

782. भूतिधिया निशि लिप्तं कज्जलमङ्गे महेशेन।
प्रातर्वीक्ष्य विरुपं मुहुर्हसति साम्बिका जयति।।

—कामकन्दले कृष्णपण्डितस्य

783. भूतिव्याजेन भूमीममरपुरसरित्कैतवादम्बु बिभ्र-
ल्लालाटाक्षिच्छलेन ज्वलनमहिपतिश्वासलक्ष्यं समीरम्।
विस्तीर्णाघोरवक्त्रोदरकुहरनिभेनाम्बरं पञ्चभूतै-
र्विश्वं शश्वद् वितन्वन् वितरतु भवतः सम्पदं चन्द्रमौलिः।।

—सदुक्ति० जयदेवस्य

784. भूत्यालेपनभूषितःप्रविलसन्नेत्राग्निदीपाङ्कुरः
कण्ठे पन्नगपुष्पदामसुभगो गङ्गाजलैः पूरितः।
ईषत्ताम्रजटाम्रपल्लवयुतो न्यस्तोजगन्मण्डपे
शम्भुर्मङ्गलकुम्भतामुपगतो भूयान्मम श्रेयसे।।

—काव्यप्रकाशस्य टीकायां मधुमत्याख्यायां रवेः

785. भूत्यै वोऽस्तु विडम्बितस्मितरुतं मूर्घ्नोद्धृतस्वर्धुनी-
निध्वानध्वनदाननैरभिनये भूषाकपालैःप्रभोः।
त्वङ्गत्तुम्बुरुनारदाहतनदद्गम्भीरभेरीरव
व्यावल्गद्गुहवाहबर्हिविहितक्रीडानुसारं वपुः।।

—स्तुतिकु०

786. भ्रमतां विमोहतिमिरे संसारे नस्त्रितापदुष्पारे।
शरणं कोपि कपाली मौलीकृतसामियामिनीनाथः'।।

—सुभाषितपद्धतौ श्रीपतेः

787. मन्थाचलाविलपयोधिविनिस्सृतेन
दृष्ट्वा ज्वलज्जगदिदं गरलेन शीघ्रम्।
पीत्वा हसंस्तदभिरक्षितवान् भृशं य-
स्तन्नीलकण्ठचरणाम्बुजमाश्रययामि।।

—अमरकोषस्य टीकायां मणिप्रभाख्यायाम्

788. मन्दस्मितानन्दितभक्तजालं
सौन्दर्यसन्तर्पितवामभागम्।

स्वानन्दसंवृत्यममन्दहासं
साम्बं भजे चन्द्रकलावतंसम्।।

—अद्वैतमकरन्दस्य टीकायां रसाभिव्यञ्जकाख्यायां
कैवल्यानन्दयोगीन्द्रस्य

789. मल्लीमाल्यधिया सुधाकरकलां कण्ठश्रियं कज्जल-
भ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया।
कैलासे प्रतिबिम्बितात्स्ववपुषो गृह्णन्हसन्त्या मुहुः
पार्वत्याः प्रतिकर्मनर्मणि चिरं मुग्धो हरः पातु वः।।

—सुभा० सुधा० भा०

790. मल्लीमाल्यभ्रमेणामृतकरकलिकां चारुसिन्दूरबुद्ध्या
ज्वालां लालाटवह्नेर्गलगरलरुचं शङ्कया कज्जलस्य।
शम्भुः कैलासशैलप्रतिफलितवपुर्मण्डलादाददानः
पार्वत्याः सम्प्रसाधाविधिमधि सुचिरं मुग्धचित्तोऽवताद् वः।।

—जानराजचम्प्वां कृष्णदत्तस्य

791. महदहङ्कृतिरवानिलकानलक्षितिगुणोदयशक्तिविजृम्भितम्।
जगदिदं गणसंज्ञितमस्य यद् गणपतिः पतिरेष शिवः स्वयम्।।

—ईशानशिवगुरुदेवपद्धतौ ईशानशिवगुरुदेवस्य

792. महस्सेतुं हेतुं सकलजगतामङ्कुरतया
सदाशम्भोरम्भो भवभवभयत्राणजनकम्।
अहं वन्दे तस्यासुरसुरमनोमोदनिकरं
चिदानन्दं पादामलकमललावण्यमधिकम्।।

—भावकुतूहले शम्भुनाथसूनोर्जीवनाथस्य

793. महादेवशम्भोमहादेव शम्भो महादेव शम्भोमहादेऽवशं भो।
महादेवशम्भोऽमहादेऽव शम्भो महादेऽवशम्भो महादेव शम्भो।।

—वृत्तरत्नाकरे केदारभट्टस्य

794. महीरथं रथाङ्गभूतवारिजेशवारिजम्
भुजङ्गराजमौर्विकं तुरङ्गभूतवेदकम्।
सुवर्णगोत्रकार्मुकं सुरारिवैरिमार्गणम्
तरङ्गमालिबाणधिं नटेश्वरं भजाम्यहम्।।

—चिदम्बरमन्त्रयन्त्रस्य व्याख्यायां चक्रप्रकाशिकाख्यायां

795. माङ्गल्यं वः क्रियासुर्मिलदटनिपुणस्थास्नुगीर्वाणभोगि-
स्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनो नागहारावलीनि।
नालीकाश्लिष्टलक्ष्मीकरचलनलिनोद्वान्तमाध्वीकधारा
विम्यत्फालेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि।।

—मल्लिकामारुते उद्दण्डरङ्गनाथस्य

796. मायासहायोऽपि सदा स्वतन्त्रः
सृजत्यवत्यत्ति जगन्मुहुर्यः।
तं नित्यबोधं श्रुतिजातयोनिम्
महेश्वरं सादरमानतोऽस्मि।।

—तत्त्वावल्यां चन्द्रकान्ततर्कालङ्कारस्य

797. मारमणमुमारमणं फणधरतल्पं फणाधराकल्पम्।
मुरमंथनं पुरमथनं वन्दे बाणारिमिसमबाणारिम्।।

—सुभा० सुधा०

798. मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः।
प्रातर्ज्जयति सलज्जः कज्जलमलिनाधरः शम्भुः।।

—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

799. मीमांसया कपटतो भुजगाम्बयेव
स्वाधीनतामुपनिषद्वनितेव नीता।
येनोद्धृतामृतफलेन गरुत्मतेव
तस्मै नमो भगवतेऽद्भुतशङ्कराय।।

—वेदान्तकल्पलतिकायाम्

800. मूर्द्धनि जीवनधारां दधदाननपङ्कजे च पञ्चत्वम्।
मदनारिरर्द्धनारी-युतो जयति सद्गति स्थाणुः।।
—अमरमङ्गलस्य टीकायां विमलाख्यायां जीवशर्मणः

801. मूर्द्धन्यस्तजटाम्बुपल्लवचयो भालस्थलीमल्लिका-
तार्त्तीयेक्षणहव्यवाहविसरज्वालाप्रदीपद्युतिः।
सम्पूर्णः सुरसिन्धुतुङ्गलहरीवारिप्रवाहैरसौ
शम्भुर्मङ्गलकुम्भविभ्रमपदम्बिभ्रत्सदा पातुः वः।।
—मल्हर —अभिलेखे जाजल्लदेवस्य

802. मूर्ध्नि द्युसिन्धुधवले धवलेन्दुलेखा
कैलासशैलशिखरे धवलश्च वाहः।
नीहारहारिणि वपुष्यपि भूतिरेषा
पुष्णातु वः सदृशसंघटना शिवस्य।।
—स्तुतिकु०

803. मूलोज्झितेन कलिकाकलितेन ताप-
शान्तिक्षमेण नमतामविपल्लवेन।
सद्यः फलेन सुमनोभिरुपासितेन
स्थाणुः श्रियेऽस्तु भवतां वपुषाऽद्भुतेन।।
—स्तुति कु०

804. मौलौ किं नु महेश ! मानिनि जलं किं वक्त्रमम्भोरुहं
किं नीलालक-वेणिका मधुकरी किं भ्रू-लता वीचिका।
किं नेत्रे शफरौ किमु स्तनयुगं प्रेंखद्-रथाङ्गद्वयं
साशङ्कामिति वञ्चयन् गिरिसुतां गङ्गाधरः पातुः नः।।
—सुभा० सुधा० भा० अकबरीकालिदासस्य

805. मौलौ पुण्यप्रवाहा सुरसरिदमला राजते यस्य वाङ्घ्रौ
कालः कण्ठे तनौ वा त्रिभुवनभयहृद्यश्च भक्तार्तिहारी।

पञ्चेषुर्यस्य शत्रुर्भवति भगवतो नन्दनो वातिशस्त-
स्तस्मै सर्वेश्वराय प्रणतिरतिशयानन्दकन्दाय मेऽस्तु।।

—श्रीहर्षकृत—प्रियदर्शिकायाष्टीकायां
एम० आर० काले महोदयस्य

806. मौलौ यस्य कलानिधेः किल कला शीर्षे च जह्नोः सुता
कण्ठे सद्गरलं करेष्वहिधनुर्बाणत्रिशूलास्तथा।
वामाङ्के गिरिजागजाननयुता दक्षे गुहो भैरवः
पार्श्वे हस्त्यजिनाम्बरः स जयति श्रीसप्तकोटीश्वरः।।

—कुण्डरत्नावल्यां कृष्णदीक्षितसूनोर्रामचन्द्रदीक्षितस्य

807. मौलौ वेगादुदञ्चत्यपि चरणभरन्यञ्चदुर्वीतलत्वा-
दक्षुण्णस्वर्गलोकस्थितिमुदितसुरश्रेष्ठगोष्ठीस्तुताय।
संत्रासान्निःसरन्त्याप्यविरतविषजद्दक्षिणार्धाङ्गबन्धा-
दत्यक्तायाद्रिपुत्र्या त्रिपुरहरजगत्क्लेशहन्त्रे नमस्ते।।

—सदुक्ति० बाणस्य

808. य एकमहसां निधिस्सकलचिज्जडाभासको-
रवीन्दुसमलङ्कृतं जगदलं यतो भासते।
स बोधयतु कालिकीः किलमदन्तरप्रोद्गत-
प्रबोधमिहिरत्विषा विविदिषावतस्सत्कलाः।।

—यन्त्रराजे मथुरानाथस्य

809. यत्तत्त्वप्रकटीकृतावतितरां देवोपि नालं यतः
स्थित्युत्पत्तिलयास्समस्तजगतां यम्मन्वते योगिनः।
साक्षान्नम्रसुरेन्द्रवृन्दमुकुटव्यालीनरत्नावली-
शोणांशुव्रजरञ्जिताङ्घ्रियुगलो भूत्यै शिवस्सोऽस्तु वः।।

—उदयेन्दिर—पत्राभिलेखे विक्रमादित्यद्वितीयस्य

810. यत्तत्त्वं श्रुतिभिस्तथोपनिषदां वृन्देन वन्दारुवन्
नित्यं गीयत ईशता निरवधिर्यत्रैव सर्वात्मना।
पूर्णानन्दतनुं दयैकजलधिं शुद्धं प्रबुद्धं सदा
मायेशानमनन्तमव्ययमजं वन्दे पर शङ्करम्।।

—सुभा० सुधा० भा०

811. यत्तादात्म्यस्फुटपरिचयोत्पादनायार्द्धदेहं
गौरीप्राप्ताहरिरपि यदीयार्द्धदेहं जहार।
अत्युद्दामापरिमितगुणग्राममीशं तमाद्यं
वन्दे यस्मादमलमतिभिः प्राप्यते मोक्षलक्ष्मीः।।

—द्रव्यसारसङ्ग्रहलोचने रघुदेवस्य

812. यत्पादयुग्मसरसीरुहलग्नचित्तो
दैत्येन्द्रसूनुरतिलङ्घितंविघ्नजातः।
जातस्तमिन्दुधवलं वरदं भुजाभ्यां
देवं त्रिनेत्रममृतं सततं भजामः।।

—न्यायसिद्धान्ततत्त्वामृते श्रीनिवासस्य

813. यदीक्षणादिदं विश्वं भवत्यृघ्नोत्यपैति च।
तमक्षय्यमहं देवं वन्दे दाक्षायणीधवम्।।

—आधानप्रयोगे

814. यदुत्तमाङ्गाङ्घ्रिविलोकनोत्सुका-
गतावधिव्योमविधातृमाधवौ।
विचक्षणो भग्यवतां सदाशिवः
स मङ्गलं मे कुरुताद्दयानिधिः।।

—देवावतरणे शिवानन्दस्य

815. यदेतन्निर्धूतद्वयमखिलविज्ञानममृतम्
समस्तव्यस्तात्मस्थिरचरविकल्पैकनिलयम्।

निरीहं निर्लेपं निरवधिसुखं ब्रह्मपरमं
नमस्तस्मै नित्यं भवभयविनाशाय हरये।।

—तत्त्वशुद्ध्यां ज्ञानघनपादस्य

816. यद्दर्शनामृतसुखानुभवेन धन्या
नेत्रोत्पलानि चिरमर्द्धनिमीलितानि।
दृङ्मार्गगोचररवीन्दुकरप्रसङ्ग-
भङ्ग्येव बिभ्रति शिवः शिवदः स वोऽस्तु।।

—स्तुतिकु०

817. यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरुढे भृशं
मेरौ पार्श्वनिवासिवासरनिशाचित्रे परिभ्राम्यति।
तैजस्यस्तडितो भवन्तु शतशो दृष्टा हि तास्ताः
कथं तामस्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः।।

—सुभा० सुधा० भा०

818. यन्नित्यं निरवग्रहस्वमहिमाऽमेयस्वभावं महा-
मायावेशवशाद्व्यवर्तत वियद्वाय्यग्न्यंबूर्वी-मुखैः।
भावैस्तत्तदनन्तविभ्रममयैर्विध्वस्तभेदोद्भवं
निर्धूतावधिबोधमोदजलधिं वन्दे महीयो महः।।

—चित्सुखाचार्यमुनिकृत— तत्त्वप्रदीपिकायाष्टीकायां
नयनप्रसादिन्याख्यायां परमहंसप्रत्यग्रूपभगवतः

819. यमेकमेव श्रयते न जायते
सपृहा परस्मै महतेऽपि नाकिने।
नमः समस्तापदुपेतपालन-
व्रताय तस्मै विभवे पिनाकिने।।

—स्तुतिकु०

820. यश्शाश्वतैश्वर्यनिधिस्सुधांशु-
कान्तोत्तमाङ्गः प्रणतामराग्र्यः।
अध्वान्तवर्ती सदयो गणेन्द्र-
स्स पातु नन्दीशविभुश्शिवो वः।।

—कविकर्णरसायने षडक्षरीशस्य

821. यस्तन्मयान् हृदयसंवदनक्रमेण-
द्राक् चित्रशक्तिगणभूमिविभागभागी।
हर्षोल्लसत्परविकारजुषः करोति
वन्देतमां तमहमिन्दुकलावतंसम्।।

—अभिनवभारत्यां अभिनवगुप्तस्य

822. यस्मिन्बुद्बुदसंकरा इव बहुब्रह्माण्डखण्डाः क्वचिद्भान्ति
क्वापि च सीकरा इव विरिञ्चाद्याः स्फुरन्ति भ्रमात्।
चिद्रूपा लहरीव विश्वजननी शक्तिः क्वचिद् द्योतते
स्वानन्दामृतनिर्भरं शिवमहापाथोनिधिं तं नुमः।।

—सुभा० सुधा० भा०

823. यस्य क्षितिः शिरसि सौमनसीव शेषा-
शेषाहिरङ्गदपदे स चकास्ति यस्य।
तस्य प्रभोरमृतनिर्झरनिर्विशेषा-
शेषाणि हन्तु दुरितानि सरस्वती वः।।

—स्तुतिकु०

824. यस्य प्राहुस्स्वरुपं सकलदिविषदां सारसर्वस्वयोगम्
यस्येषुश्शार्ङ्गधन्वा समजनि जगतां रक्षणे जागरुकः।
मौर्वी दर्वीकराणामपि च परिवृढः पूस्त्रयीसारलक्ष्यम्
सोऽव्यादव्याजमस्मानशुभभिदनिशं नाकिनां श्रीपिनाकः।।

—शिवस्तोत्रे

825. यस्य प्रेतवने निवासभवनं भूतैः प्रभुत्वं भृशं
भूतिर्भूषणमङ्गरागरचना प्रीतिश्चदुर्गां प्रति।
कण्ठे तिष्ठति कालकूटमशिवोप्येवं शिवो यः स्थितः
सर्वव्याधिहरश्चराचरधरः पायात्स वः शङ्करः।।

—प्रस्तराभिलेखे कोक्कलस्य

826. यस्य लीलावशेनेदं जन्मस्थितिलयं व्रजेत्।
आनन्दैकरसं वन्दे तमुमासहितं शिवम्।।

—कुण्डमण्डपप्रकाशिकायां टीकायां काशीदीक्षितस्य

827. यस्याङ्के शरदम्बुदोरसि तडिल्लेखेव गौरीप्रिया
देहार्द्धेन हरिः समाश्रितमभूद्यस्यातिचित्रं वपुः।
दीप्तार्कद्युतिलोचनत्रयरुचा घोरं दधानो मुखं
देवत्रासनिरस्तदानवगजः पुष्णातु पञ्चाननः।।

—ताम्राभिलेखे लक्ष्मणसेनस्य

828. यस्याङ्गकान्तिप्रकरात्स्वकीय-
भासोऽभिभूतिं परिशङ्कमानः।
शिरस्पदं शीतमरीचिरागा-
च्छ्रेयोऽभिवृद्धिं शिव एष दद्यात्।।

—बौधायनीयशुल्बसूत्रे

829. यस्याज्ञया जगत्स्रष्टा विरञ्चिः पालको हरिः।
संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने।।

—सौरपुराणे व्यासस्य

830. यस्यानन्दस्फुरितनयनोत्क्षेपमात्रेण विश्वम्
सृष्टं ध्वस्तं मुहुरपि पुनस्तस्य गात्रे विलीनम्।
मृत्युं जित्वा सकलभुवनं पाति शश्वद् य एव
वन्देऽहं तं सकलविभवागाररुपं महेशम्।।

—रसजलनिधौ भूदेवशर्मणः

831. यस्यार्द्धाङ्गहरा गिरीन्द्रतनया शीर्षे हरिद्दीपिनी
भाले सोमकला गले नरशिरोमाला शुभा राजते।
प्रीत्या भूतगणैः समं नटगृहे चोत्सार्य विघ्नान्दृशा
नृत्यंस्ताण्डवडम्बरेण विधिना पायात्सदा नो हरः।।
—गोपीचन्द्रोपाख्याननाटके जयभूपतीन्द्रमल्लदेवस्य

832. यस्यार्द्धं गिरिजा मूर्ध्नि गङ्गा भाले विधोः कला।
अङ्के कुमारगणपौ तं सदाशिवमाश्रये।।
—गङ्गेशोपाध्यायकृत— तत्त्वचिन्तमणेष्टीकायां
मिताक्षराख्यायां सूर्यनारायणशुक्लस्य

833. यस्याशावसनं गतिश्चवृषभः खट्वाङ्गशूलं करे
चन्द्रश्चारुविभूषणं वरतनौ यज्ञोपवीतं फणी।
दुर्जेयस्त्रिपुरो जितश्च मदनो येनान्धको निर्जितो
गङ्गा मूर्ध्निधृता च पुण्यतटिनी तस्मै नमः शम्भवे।।
—दैवज्ञबान्धवे हरदत्तस्य

834. यस्याशाः परिधानमिन्दुकलिका धत्ते शिखण्डश्रियं
ज्वालापल्लवितः शिखी दृशि शिरोरङ्गे सरिन्नृत्यति।
यं पश्यन्ति निरन्तरायमनसः संसारमोहच्छिदं
तं वन्दे सुरवृन्दवन्दितपदद्वन्द्वारविन्दं शिवम्।।
—उदयनाचार्यकृत—न्यायवर्त्तिकतात्पर्यपरिशुद्धेष्टीकाया
न्यायनिबन्धप्रकाशाख्यायाम्

835. यस्यांशः परमाह्वयः परशिवः कंकालकालान्तको
ध्यानातीतगतादिनित्यनिलयः साकल्यसङ्कोचकः।
अभ्यासान्तरभासकः समरसः सर्वात्मको ध्वंसकः
सोऽयं सर्वमयो ददातु जगतां विद्यादि सिध्यष्टकम्।।
—रसरत्नाकरे

836. यस्येश्वरस्य विमलं चरणारविन्दम्
संसेव्यते विबुधसिद्धमधुव्रतेन।
निर्वाणसूचकगुणाष्टकवर्गपूर्णम्
तं शङ्करं सकलदुःखहरं नमामि।।

—कामरत्ने नित्यनाथस्य

837. यस्यैकस्य सुवर्णसंभृतपदन्यासानवद्यक्रम-
व्यक्तिः प्रेङ्खति गौरनर्गलगतिस्वाच्छन्द्यहृद्याकृतिः।
प्रख्याताद्भुतसर्गबन्धरचनासंरब्धिरोजस्विनः
काव्यस्योदयभूरसौ भवतु वः प्रीत्यै पुराणः कविः।।

—स्तुतिकु०

838. यस्योपवीतगुण एव फणाभृदेकः
वृक्षोरुहे कुचपटीयति वामभागे।
तस्मै ममास्तु नमसामवसानसीम्ने
चन्द्रार्द्धमौलिशिरसे महसे नमस्या।।

—भौष्मीपरिणयचम्प्वां रत्नखेटश्रीनिवासमखिनः

839. यस्योर्वीक्षुभिताङ्घ्रिचारकलनैः श्यामोरगालङ्कृतै-
र्द्यौः शून्या च कपर्दभारझटनासँल्लग्नतारागणाः।
यन्मूर्ध्नि प्रतमोऽपहत्य महसा गङ्गासुहृद्भ्राजते
रक्षेद्विश्वमिदं सनाटकवपुर्गङ्गावहो धूर्जटिः।।

—विशालाभजने शिवप्रसादस्य

840. यस्त्यक्त्वा रुपमाद्यं प्रभवति जगतोऽनेकधानुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोहीशः स वोऽव्यात्सितविमलतनुर्योगदो योगयुक्तः।।

—पातञ्जलसूत्रभाष्ये

841. युष्मान् पातु चिरन्तनं किमपि तत्सत्यं चिदेकात्मकं
प्रोतं यत्र चराचरात्मकमिदं वाक्चेतसोर्यत्परम्।
यस्माद् विश्वमुदेति भाति च यतो यस्मिन्पुनर्लीयते
यद्वित्तं श्रुतिशान्तदान्तमनसामानन्दकन्दं महः।।

—वृत्तमौक्तिके चन्द्रशेखरभट्टस्य

842. येनोपदिष्टमनपायमुपायमाप्य
स्वर्गापवर्गविभवैर्विभवो भवन्ति।
देवः स वः सकलकर्मफलोपलम्भ-
विस्रम्भभूमिरभिवाञ्छितसिद्धयेऽस्तु।।

—स्तुतिकु०

843. ये मूकावधिराविमूढमतयः सच्छास्त्र.ाविद्वेषिणो
मर्त्यास्ते गुरुवर्यधुर्यकं पदं नीता महाराधनैः।
तं त्वानन्दवने वसन्तमनिशं विश्वेश्वरं सादरम्
पार्वत्यासहितं स्मरामि सततं विघ्नौघविच्छित्तमे।।

—गुणरत्नप्रकाशे

844. योगदान्तैकदृश्यात्मा यो गदान्तकरो नृणाम्।
तत्त्वावस्थाणवे तस्मै तत्त्वावस्थाणवे नमः।।

—स्फोटसिद्धौ मण्डनमिश्रस्य

845. योगिध्येयं विमलविशदप्रस्फुरद्रम्यकान्तिम्
शान्तं बुद्धं सुरपरिवृढैरानतैरर्च्यमानम्।
कारुण्यार्द्रं हसितसुषमामोदिताशेषविश्वम्
साक्षात्तत्त्वप्रतिकृतिमुमासंयुतं नौमि शम्भुम्।।

—सुभा०सुधा०भा०

846. योगी योगिवरैरगे गणगणैर्यक्षैश्च यक्षालये
सिद्धैः सिद्धिवलैरलं सुखनिधिर्लोके च लोकाधिपैः।
विद्यापादविलेपनादिविभवैर्विद्याधरैः सादरं
पूज्यो यः सततं समाधिकुसुमैर्भावोज्वलैः सोऽवतात् ।।

—ब्रिटिशसङ्ग्रहालयस्थ—संस्कृताभिलेखे

847. योऽनुग्रानुग्रतेजा जनयति सकलानालयं यं लभन्ते
सर्वे निर्वान्ति येन श्रुतिपथपथिका वौषडातन्वते च।
यस्मै यस्मादकस्मात्‌रिभवचकिता यस्य संरोचयन्ते
चिन्ता यस्मिन्प्रवृत्ता भृशविशदधियः संश्रये तं गिरीशम्।।

—ब्रह्मसूत्रशाङ्करभाष्यस्य न्यायनिर्णयाख्यायां आनन्दगिरेः।

848. यो भावः सर्वभावेषु स्वनुस्यूतो विभाव्यते।
भावये तं भवं देवं भवाभावाय केवलम्।।

—साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रस्य

849. यो योगिनामपि मनश्चपली चकार
पुष्पेषुभिर्व्यथयति स्मयनीयशोभः।
तं भालनेत्रशिखिना शमयाञ्चकार
मारं हरं तमहमाशु नमामि भक्त्या।।

—मन्त्रचन्द्रिकायाम्

850. यो वामन्दरवपुषं ममर्द मातङ्गवरममन्दरवपुषम्
कान्तां चापधराद्यः क्षपितो येनाङ्गजोऽपि चापधराद्यः।
शिरसां सकले शकले स्खलिता सरितां वरा च सकलेशकले
यस्य च कोटीरमिता स्फुटं विबभ्राम वर्षकोटीरमिताः।।

—युधिष्ठिरविजये वासुदेवस्य

851. योऽसौ तत्सुखचित्तनुर्मतिगिरां योनास्पदं मायया
जीवेशादिविभेदभाक् खपवनाग्न्यब्भूमिकृल्लीलया।

स्वेषां स्थूलतमांसि वीक्ष्यतु मतिं लोकेऽवतीर्णः प्रभु-
र्लिङ्गात्मा करुणार्द्रधीर्विजयतां श्रीसाम्बमूर्तिः शिवः।।
—शैवसुधाकरे स्वामिसदानन्दस्य

852. यं ध्यायन्त्यसुराः सुराश्च निखिला यक्षाः पिशाचोरगाः
राजानश्च तथा मुनीन्द्रनिवहाः सर्वार्थदं सिद्धये।
भक्तानां वरदाभयप्रदकरं पाशाङ्कुशालङ्कृतं
चञ्चच्चामरवीज्यमानमनिशं सोऽहं श्रये शङ्करम्।।
—यन्त्रचिन्तामणौ गङ्गाधरसूनोर्दामोदरस्य

853. यं वेदाः सततं स्तुवन्ति नितरां ध्यायन्ति यं योगिनो
यः सृष्ट्यादिनिदानमुष्णकिरणेन्द्वग्नीक्षणो यः पुमान्।
तस्मिन्शैलसुताकृतार्द्धवपुषि प्रज्ञात्मके शाश्वते
मच्चित्तं रमतां सदा भयहरे श्रीमत्परब्रह्मणि।।
—तर्कसङ्ग्रहस्य टीकायां गूढार्थप्रकाशिकाख्यां कृष्णधूर्जटिदीक्षितस्य

854. यः कन्दुकैरिव पुरन्दरपद्मसद्म-
पद्मापतिप्रभृतिभिः प्रभुरप्रमेयः।
खेलत्यलङ्घ्यमहिमा सा हिमाद्रिकन्या-
कान्तः कृतान्तदलनो लघयत्वघं वः।।
—स्तुतिकु०

855. यः कर्त्ता जगदुद्भवस्थितिलयानुद्भूतया लीलया
यो वाचामधिनायकश्श्रयति यं सर्वज्ञतैकाश्रया।
यद्भक्तिप्रवणैरपायविषमस्तार्यो भवाम्भोनिधि-
र्द्देयाद् वस्स विभूतिमिन्दुशकलापीडो भवानीपतिः।।
—कन्यकुमारी—अभिलेखे वीरराजेन्द्रदेवस्य

856. यः कुण्डमण्डलकमण्डलुमन्त्रमुद्रा-
ध्यानार्चनस्तुतिजपाद्युपदेशयुक्त्या।

भोगापवर्गदमनुग्रहमानतानां
व्यानञ्ज रञ्जयतु स त्रिजगद्गुरुर्वः।।

—स्तुतिकु०

857. यः क्रोधाग्नेः समधिमकरोद्दर्पकं दर्पकन्द-
ञ्छेदाभिज्ञं व्यधित जगतां यः कृतान्तं कृतान्तम्।
नेतुं यश्च प्रभवति मतिह्रासमस्तं समस्तं
निष्प्रत्यूहं प्रथयतु पथि त्रासदे वः स देवः।।

—स्तुतिकु०

858. यः शान्तः परमान्वयः परशिवः कङ्कालकालान्तको
ध्यानातीतमनादिनित्यनिचयः सङ्कल्पसङ्कोचकः।
आभासान्तरभासकः समरसः सर्वात्मनांबोधकः
सोयं सम्प्रददातु मंत्रिजगतां विद्यादि सिद्ध्यष्टकम्।।

—नागार्जुनकामरत्ने नागार्जुनस्य

859. यः सर्वदेवतगणेषु महानुपेन्द्रब्रह्मादिभिः सततपूजितपादपद्मः।
स स्वर्धुनीविमलवारितरङ्गभङ्गैरस्माकमाशु शमयत्वशुभं महेशः।।

—काव्यप्रदीपस्यटीकायां प्रभाख्यायां गोविन्दस्य

860. यः सुवर्णेन चन्द्रेण गाङ्गेयेनाग्निजन्मना।
काञ्चनेन श्रियं धत्ते तस्मै स्मरजिते नमः।।

—स्तुतिकु०

861. रचयति सहसा यच्चित्रमेतं प्रपञ्चं
प्रशमयति च तद्वत्केनचित्कौतुकेन।
अविदितमपरैस्तच्चण्डमुण्डादिनाना
दनुजदलनदक्षं शर्व सर्वस्वमव्यात्।।

—हरिविलासे लोलिम्बराजस्य

862. रजोजुषे जन्मनि सत्त्ववृत्तये
स्थितौ प्रजानां प्रलये तमःस्पृशे।
अजाय सर्गस्थितिनाशहेतवे
त्रयीमयाय त्रिगुणात्मने नमः।।

—कादम्बर्यां बाणभट्टस्य

863. राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्वं
नागा नागात्मजार्द्धं नभसितधवलं यद्वपुर्भूषयन्ति।
मारामारागिणी भून्मतिरिति यमिनां येन वोदाहि मारः
स प्ताः सप्ताश्वनुन्नारुणकिरणनिभाः पातु बिभ्रत्तिनेत्रः।।

—सुभा०

864. लक्ष्मीवल्लभलोचनालिलसितं यत्पादपङ्केरुहं
यन्मूर्त्तिः सशिवा विभाति यमुनायुक्तेव देवापगा।
यस्य ज्या रथताङ्गत्ताभरणतां ज्याचापचूडामणि-
श्चक्रत्वं सदनत्वमाप च धनुः स श्रीशिवः पातु नः।।

—सिद्धान्तरत्नाकरे विश्वेश्वरविज्ञस्य

865. लङ्कापतिभुजवल्लीवेष्टितमवलोक्य कैलासम्।
स्मृतकालीबाहुलतावलयितनिजविग्रहः शिवो जयति।।

—आर्यासप्तशत्यां विश्वेश्वरपण्डितस्य

866. लास्ये गात्रसमीरदीपितललाटस्थेक्षणाग्निस्फुर-
त्कीलाऽऽशीर्णतुषाररश्मिविगलत्पीयूषधाराभरैः।
जीवद्भिर्गललम्बिहारलतिकामुण्डैः स्तुतस्त्र्यम्बकः
शम्भो! शङ्कर ! चन्द्रचूड! गिरिशेत्येवं मुदे जायताम्।।

—कामकन्दले कृष्णपण्डितस्य

867. लोकत्रयस्थितिलयोदयकेलिकारः
कार्येण यो हरिहरद्रुहिणत्वमेति।

देवः स विश्वजनवाङ्मनसातिवृत्त-
शक्तिः शिवं ददातु शश्वदनश्वरं वः।।

—स्तुतिकु०

868. लोकाम्बा कमलालया परिवृढप्रोक्तावनी नन्दिनी
वक्त्राम्भोजचकोरपञ्चदशिका विविक्तङ्कलापालिकाम्।
सीताभृच्चरणः करोतिमधुरश्रीमरामनामावली
मत्तेऽनम्बरशम्बरारिदहनः स्तान् मत्सहायः शिवः।।

—रामचरणकृत—रामपञ्चदशीस्तोत्रस्य टीकायां
कलापालिकाख्यायां लक्ष्मीनारायणस्य

869. लोकाविष्कृतिसंक्षयस्थितिकृतां यः कारणं वेधसां
ध्वस्तध्वान्तचयाः परास्तरजसो ध्यायन्ति यं योगिनः।
यस्यार्द्धस्थितयोषितोऽपि हृदये नास्थायि चेतोभुवा
भूतात्मा- त्रिपुरान्तकः स जयति श्रेयः प्रसूतिर्भवः।।

—हरहा—अभिलेखे

870. वक्ता च यः सुखयिता च विभुः श्रुतीनां
वक्षः करं च वहते कमलाङ्कितं वः।
यो मूर्ध्नि वर्ष्मणि च हैमवतीं बिभर्ति
त्रैधं भवन् भवतु वः स शिवः शिवाय।।

—स्तुतिकु०

871. वन्दारुवाञ्छितपुमर्थसमर्थनोद्य-
न्मन्दारशाखिनममन्दकृपारसार्द्रम्।
मन्दाकिनीजलपरिष्कृतमौलिभागम्
विन्दामि साम्बमनिशं शरणं महेशम्।।

—आश्वलायनगृह्यसूत्रवृत्तौ

872. वन्दे गिरीशं गिरिजासमेतं
कैलाशशैलेन्द्रगुहागृहस्थम्।
अङ्के निषण्णेन विनायकेन
स्कन्देन चात्यन्तसुखायमानम्।।

—जातकसारे

873. वन्दे देवमुमापतिं सुरपतिं वन्दे जगत्कारणम्
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम्।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियम्
वन्दे भक्तजनार्त्तिहं च वरदं वन्दे शिवं शङ्करम्।।

—उत्सर्गमयूखे

874. वन्दे देवं जलधिशरधिं देवतासार्वभौमं
व्यासप्रष्ठा भुवनविदिता यस्य वाहाधिवाहाः।
भूषापेटी भुवनमधरं पुष्करं पुष्पवाटी
शाटीपालाः शतमखमुखाश्चन्दनद्रुर्मनोभूः।।

—सुभा०सुधा०भा०

875. वन्दे विश्वमयं देवं सर्ववाङ्मन्त्रनायकम्।
यदंशवर्णनस्तुत्या तत्पूजाफलभाङ् न कः।।

—जैनराजतरङ्गिण्यां श्रीवरस्य

876. वन्दे शम्भुं विरञ्चिप्रमुखसुरशिरोरत्नकोटिरकोटि-
प्रोद्यन्माणिक्यनीराजितचरणनखं वेदवेदाङ्गमूलम्।
सोमार्द्धचूडं विमलसुरसरिद्वीचिराजत्कपर्दम्
विद्यामूर्त्तिं वरेण्यं वरदमभिमतप्राप्तये विश्वनाथम्।।

—शिवभक्तविलासस्य टीकायां प्रकाशिकाख्यायां नृसिंहस्य

877. वन्दे शम्भुं सदानन्दं शङ्करं करुणाकरम्।
चन्द्रार्द्धचूडमिन्द्राद्यैर्वन्दितं नन्दिवाहनम्।।

—कार्त्तवीर्यार्जुनकल्पे

878. वन्देऽहं गतसन्देहं शङ्करं लोकशङ्करम्।
कारणं जगतः सर्वदुरितार्त्तिनिवारणम्।।

—चिकित्सामञ्जर्यां राघवस्य

879. वन्देऽहं विषकंधरं वृषचरं वन्दे हि गङ्गाधरम्
वन्दे शूलवराभयानलकरं वन्देत्त्वगाशाम्बरम्।
वन्दे त्र्यक्षमुमान्वितं शशिधरं वन्देऽमराधीश्वरम्
वन्दे भक्तसुरद्रुमं स्मरहरं वन्दे जगच्छंकरम्।।

—लिङ्गार्चनचन्द्रिकामातृकायां स्फुटश्लोकः

880. वर्णैश्चतुर्भिर्विलसन्ति यत्र
क्रमेण शक्तीनविनायकाच्युताः।
अङ्गी शिवश्च प्रणवेन यत्समम्
ददातु तन्मे शिवनाम मङ्गलम्।।

—बृहद्दैवज्ञरञ्जने रामदीनस्य

881. वाक्कायचेतः प्रभवापराधप्रबन्धसम्बन्धतमः प्रकाश।
उन्मुद्रितज्ञानसुधानिधान गौरीपते त्वां शरणं प्रपद्ये।।

—महाविद्याविडम्बने वादीन्द्रपण्डितस्य

882. वाणं वीणाक्षमाले कमलमहिमथो बीजपूरं त्रिशूलं
खट्वाङ्गं दानहस्ताभयकरसहिताः पाणयो धारयन्तः।
रक्षन्तु व्यञ्जयन्तः सकलरसमयं देवदेवस्य चित्तं
नोचेदेवं कथं वा त्रिभुवनमखिलं पालितं दानवेभ्यः।।

—संस्कृतदानपत्राभिलेखे

883. वामाङ्करुढगिरिजाकुचकुम्भकर्णम्
वामेन पाणिजलजेन परिस्पृशन्तम्।

सव्येतरेण विमलं परमार्थतत्त्वम्
सद्भ्यः प्रबोधयितुं काममहं भजामि।।

—वराहनदीमाहात्ये

884. वामाङ्गासक्तकान्ताकचकुसुममयोभालनेत्रानलार्चिः
पीतोष्मामौलिचञ्चत्सुरनगरनदीनीररम्यः सदानः।
स्फीतोत्तंसेन्दुकान्तिर्द्विरददृतिदृढाच्छादनाव्यक्तशीतः
शम्भुर्भस्मास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्त्तुमूर्त्तिः।।

—कृत्यसारसमुच्चये माणिकशर्मासूनु—अमृतनाथझा शर्मणः

885. वामाङ्गीकृतया हिमाद्रिसुतया कल्याणविख्यातया
प्रेम्णा सेवकमानसाम्बुजगुहागर्भेषु सन्धानितः।
स्वेषां कामितपूरणाय सततं सन्त्यक्तसर्वस्पृहो
देवोऽसौ वृषभध्वजो दिशतु वः श्रेयः परं शङ्करः।।

—कन्यामाधवे सुब्रह्मण्यस्य

886. वामाङ्कीकृतवामाङ्गि कुण्डलीकृतकुण्डलि।
आविरस्तु पुरो वस्तु भूतिभूत्यम्बराम्बरम्।।

—शा० प० सार्वभौमस्य

887. वामाङ्गेन सतीं गिरीन्द्रतनयां मूर्ध्ना दधत्स्वर्धुनीं
सर्वाङ्गे विकसद्विभूतिधवलश्चन्द्रार्द्धचूडो मुदा।
विश्वाधारफणीन्द्रहारवलयी कुर्वन्भ्रमिं स्थानकम्
रङ्गे ताण्डवरौद्रकेलिनिपुणो नृत्येश्वरः पातुः वः।।

—जैमिनिभारतनाटके भूपतीन्द्रमल्लदेवस्य

888. वामालकावल्लभभावमुद्रासीमाविभागेन्द्रमणीशिलेव।
रोमावली राजति यस्य मध्ये सोमावतंसः स सुखाय भूयात्।।

—रुक्मिणीकल्याणे राजचूडामणिदीक्षितस्य

889. वामां वामार्द्धभागे शिरसि शशिकलां फालदेशे कृशानुं
कण्ठे क्ष्वेलं कराग्रे मृगपरशुकपालाङ्गमङ्गे भुजङ्गान्।
बिभ्रत्स्वव्योमवाताग्निजलवसुमतीपुष्पवन्मूर्त्तिरार्ति-
निघ्नन्विघ्नेशतातः प्रदिशतु भवतां शाश्वतं शर्म शम्भुः।।

—नलाभ्युदये

890. विजयजयप्रदाय शबराय वराय नमः
सकलकलङ्कसङ्करहराय हराय नमः।
जगदगदप्रगल्भविभवाय भवाय नमः
प्रवरवरप्रकाशितशिवाय शिवाय नमः।।

—स्तुतिकु०

891. विततविशदस्वात्मादर्शे स्वशक्तिरसोज्वलां
प्रकटयति यो मातृस्वांशप्रमेयतटद्वये।
बहुतरभवद्भङ्गीभूमिं क्रियासरितं परां
प्रकटयतु नः श्रीमान् गौरीपतिः स ऋतं परम्।।

—ईश्वरप्रत्यभिज्ञायां अभिनवगुप्तस्य

892. विद्यामायाप्रकृतरीति यद् गीयते दृष्टमेतत्
साहित्येन त्रिभुवनमयीं सृष्टिमेतां वितन्वन्।
आनन्दोऽहं चितिरहमिदं मन्मयं सर्वमित्थम्
यः स्वं स्तौति श्रुतिमयगिरा तं नुमः शम्भुमीशम्।।

—भेदरत्ने शङ्करभिश्रस्य

893. विनतानन्दनं नागविग्रहोग्रमुखं दृशा।
विनायकमुपासीनं भजते स्वामिने नमः।।

—स्तुतिकु०

894. विमलकलाश्रयाभिनवसृष्टिमहा-जननी
भरिततनुश्च पञ्चमुखगुप्तरुचिर्जनकः।

तदुभययामलस्फुरितभावविसर्गमयम्
हृदयमनुत्तरामृतकुलं मम संस्फुरतात्।।

—श्रीपरात्रिंशिकायाष्टीकायां तत्त्वविवेकाख्यायां अभिनवगुप्तस्य

895. विमलरजसे विश्वोत्पत्तौ भवाय नमो नमो
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः।
प्रबलतमसे तत्संहारे हराय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः।।

—सुभा०सुधा०

896. विरिञ्चिविष्णुवन्दितं नगाधिराजकन्यका-
विभूषितार्द्धविग्रहं प्रभूतबन्दिसंस्तुतम्।
लसज्जताटस्फुरत्सुरापगाविनिःसर-
द्विशुद्धवारिशीतलं नमामि चन्द्रशेखरम्।।

—बुधभूषणे शम्भुनृपस्य

897. विलसति सितरुपा स्वर्धुनी मूर्ध्नि यस्मिन्
सितमपि च हिमांशोर्मण्डनं खण्डमस्ति।
निदधति हृदि नित्यं योगिनः शुद्धकायं
प्रमुदितमधिसायंकालमन्तर्महोस्तु।।

—कस्यचिदज्ञातनाम्नो नाटकस्य प्रस्तावनाभागे
शङ्करदीक्षितस्य

898. विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।
श्रेयः प्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे।।

—तंत्रवार्तिके कुमारिलभट्टस्य

899. विश्वव्यापी विश्वशक्तिः पिनाकी
विश्वेशानो विश्वकृद्विश्वमूर्त्तिः।
विश्वज्ञाता विश्वसंहारकारी
विश्वाराध्यो राधयत्वीहितं नः।।

—न्यायवार्त्तिकतात्पर्यटीकायां वाचस्पतिमिश्रस्य

900. विश्वाधिको विश्वमयोऽप्रमेयः
षडङ्गकल्याणगुणाभियुक्तः।
विधोर्विधातुर्वरदः प्रसन्नः
पायात्पतिश्शैलभुवश्शिवो नः।।

—कविकर्णरसायने षडक्षरीशस्य

901. विश्वेश्वरं नतसुरासुरमौलिरत्नं
मन्दारकुन्दकुसुमावृपादपीठम्।
भस्मावकुण्ठमहिकण्ठमुमोपकण्ठम्
सोत्कण्ठमाश्रयमनः पटुनीलकण्ठम्।।

—रुद्रभाष्ये अहोबलस्य

902. विश्वं सृजत्यवति खादति लीलयैव
यो ब्रह्म-विष्णु-हर-रुपमुपेत्य शक्त्या।
साक्षात् शिवः शिवतरो गिरिजाङ्ग-सङ्गात्
गङ्गाऽगमात् शिवतमः स जगत् पुनातु।।

—उदयनाचार्यकृत—न्यायकुसुमाञ्जल्याष्रीकायां प्रभाख्यायां
हरिदासभट्टाचार्यस्य

903. विष्णोरागमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं
कौपीनं परिधाय चर्मकरिणः शम्भुः पुरो धावति।
दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद् भूतले
कृत्तिर्विस्खलिता ह्रिया नतमुखो नग्नो हरः पातु वः।।

—सुभा० सुधा० भा०

904. वीक्षं वीक्षमनुक्षणं मृतिकुलैर्नृणां कुलं सङ्कुलं
तत्त्रातुं समजीजनो जनहितं हीनं प्रसूतश्रियम्।
सर्वज्ञेश्वरशङ्करप्रभृतयो मुख्याः समारास्ततः
कारुण्याकर किङ्करोस्मि भवतो भूत्यै महत्यै भव।।

—रसेन्द्रचूडामणौ सोमदेवस्य

905. वीरासनैकनिलयाय हिरण्मयाय
न्यग्रोधमूलगृहिणे निटिलेक्षणाय।
गङ्गाधराय गजचर्मविभूषणाय
प्राचीनपुण्यपुरुषाय नमः शिवाय।।

—मन्त्रमहोदधेष्टीकायां काशीनाथस्य

906. वृषधन धनदप्रिय प्रियार्ध-
प्रथनविदग्ध विदग्धचित्तयोने।
पुरहर हरिणाङ्कचूड चूडा-
भुजगभयङ्कर धूर्जटे नमस्ते।।

—सदुक्ति० भोजदेवस्य

907. वृषशिखरिनिवासः श्रीनिवासः श्रिताना-
मभिमतफलदाने कल्पवृक्षातिशायी।
अहरहरुपयातैः सेव्यमानोऽर्थिवृन्दैः
कलयतु कुशलं नः कोऽपि कारुण्यराशिः।।

—नागेशभट्टकृत—ज्ञापकसङ्ग्रहस्य विवृत्तौ रामानुजताताचार्यस्य

908. वृषाङ्काय नमस्तस्मै यस्य मौलिविलम्बिनी।
जटावेष्टनजां शोभां विभावयति जाह्नवी।।

—मेदिनीकोशे

909. वेदान्तव्रातनीरं शतपथकथितन्यायरत्नप्रपूरम्
पारावारं सुतारं निगममुखषडङ्गात्मसद्ग्राहघोरम्।
कारं कारं सुगाहं श्रुतमतमथितैर्ब्रह्मविद्यामृतं यः
प्रादादादाय तस्मादशरणशरणं शङ्करं तं नमामः।।

—न्यायकल्पलतिकायाम् आनन्दपूर्णमुनीन्द्रस्य

910. वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।

अन्तर्यश्च मुमुक्षभिर्नियमितिप्राणादिभिर्मृग्यते
स स्थाणुः स्थिर-भक्ति-योग-सुलभो निःश्रेयसायाऽस्तु वः।।

—विक्रमोर्वशीये कालिदासस्य

911. व्यक्तप्रधानपुरुषात्मकमस्वतन्त्र-
मेतत् समस्तमधितिष्ठति यः स्वतन्त्रः।
तस्मै शिवाय परमाय दशाव्ययाय
साम्बाय सादरमयं विहितः प्रणामः।।

—काशिकाव्याख्यायां पदमञ्जर्याख्यायां हरदत्तमिश्रस्य

912. व्याख्यामुद्राक्षमाले कलशसुलिखिते बाहुभिर्वामपादम्
बिभ्राणो जानुमूर्ध्ना पदतलनिहतापस्मृतिर्द्रुद्रुमाधः।
सौवर्णे योगपीठे लिपिमयकमले सूपविष्टस्त्रिनेत्रः
क्षीराभश्चन्द्रमौलिर्वितरतु विपुलां शुद्धबुद्धिं शिवो नः।।

—वेदान्तकौमुद्यां रामाद्वयाचार्यस्य

913. व्याप्तं मूर्तिभिरष्टभिर्जगदिदं यस्याखिलं दृश्यते
स्रष्टा राजसभावसंस्थितिविधौ सत्वाश्रितश्शार्ङ्गधृक्।
संहारे तमसा युतो हर इति प्रोक्तो य एकस्त्रिधा
स स्थाणुर्जयति त्रिरूपसहितोऽलिङ्गोऽपि लोकार्चितः।।

—लघुभास्करीये भास्कराचार्यस्य

914. व्यालमालमनलामलभालं शूलपालममलामलशीलम्।
कालकालसकलं कलयामो लीलया तमनुवेलमलीलम्।।

—महिम्नस्तोत्रस्य टीकायां कल्पलताख्यायां अहोबलस्य

915. व्योम्नीव नीरदभरः सरसीव वीचि-
व्यूहः सहस्रमहसीव सुधांशुधाम।
यस्मिन्निदं जगदुदेति च लीयते च
तच्छाम्भवं भवतु वैभवमृद्धये वः।।

—सुभा०

916. शतमखपूजितपादं शतमखमनसोऽप्यगोचराकारम्।
विकसितजलरुहनेत्रमुमाच्छायाङ्कमाश्रये शम्भुम्।।
—आत्मबोधस्य टीकायां शङ्कराचार्यस्य

917. शम्भुर्दिशतु नः शूली मङ्गलं लोकमङ्गलः।
पार्वतीवल्लभः स्थाणुः पिनाकी वृषभध्वजः।।
—आशौचाष्टकवृत्तौ

918. शम्भोरदभ्रशरदभ्रतुषारशुभ्रं
भ्राजिष्णुभूतिभरशीभरभास्वराभम्।
दिश्याद्वपुर्भसलनीलगलं कलङ्का
लङ्कारशारदशशाङ्कनिभं शुभं वः।।
—स्तुतिकु०

919. शरच्चन्द्रकलाखण्डमण्डनायितमौलये।
नमोस्तु वामदेवाय वामकामविघातिने।।
—साहित्यकण्टकोद्धारे

920. शशाङ्कमौलिं भसितेन भासुरं पञ्चाननं शैलसुताधिनाथम्।
त्र्यक्षं गिरीशं दशबाहुमण्डितं कुबेरमित्रं सततं नमामि।
—बुधभूषणे शम्भुनृपस्य

921. शान्तं तुरीयमद्वैतं शिवं ब्रह्मसनातनम्।
अनन्तं चिन्मयं नौमि सान्द्रानन्दं परात्परम्।।
—आरव्ययामिन्याम्

922. शिखिफणिगोपञ्चास्यान् सुरसरितं गिरिसुता च सन्नीत्या
निर्वहति यो महेशो मनोरथाप्तये स स्तात्।।
—माधवस्वातन्त्र्ये गोपीनाथदीक्षितस्य

923. शिल्पं त्रीणि जगन्ति यस्य कविता यस्य त्रिवेदी गुरो-
र्यश्चक्रे त्रिपुरव्ययं त्रिपथगा यन्मूर्ध्नि माल्यायते।
त्रीन् कालानिव वीक्षितुं वहति यो विस्फूर्जदक्ष्णां त्रयं
स त्रैगुण्यपरिच्छदो विजयते देवस्त्रिशूलायुधः।।

—सदुक्ति० वसुकल्पदत्तस्य

924. शिवतनुं शिवमच्युतमव्ययं स शिवमुत्तमशैवसमर्चितम्।
शिवशिवं शिवदं शिवदं शिवं शिवदृशं शिवलोकशिवं भजे।।

—श्रुतबोधस्य टीकायां मनोरमाख्यायां लक्ष्मीनारायणशर्मणः

925. शिवम्प्रणम्य सशिवं शिवदं शिवकीर्त्तिदम्।
गुणातीतङ्गुणमयम् व्यक्तमव्यक्तमव्ययम्।।

—नाडीप्रकाशे शङ्करसेनस्य

926. शिवस्मरणमेवैकं संसारान्तकनाशनम्।
घनौघोरघोरदावाग्निनिर्वापणपटुर्भवेत्।।

—दृष्टान्तकलिकाशतके कुसुमदेवस्य

927. शिवायास्तु नमस्तस्मै त्रैलोक्यमहीभुजे।
अशेषक्लेशनिर्मुक्तनित्यैश्वर्यदशाजुषे।।

—जैनराजतरङ्गिण्यां श्रीवरस्य

928. शिवं शिवाश्लिष्टतनुं तनूज-
विराजितोत्सङ्गमुदूढगङ्गम्।
स्फुरत्कलाधीशकलाकलापम्
वन्दे समारुढवृषं वृषाङ्कम्।।

—मुकुन्दविलासे भगवन्तस्य

929. शिवं शिवेशं शिवदं शिवाश्रयं
शिवाङ्गकं शैव शिवोपशोभितम्।

शिवं शिवेज्यारतभीतमन्तकं
शिवो पदेष्टारमनन्तकं नुमः।।

—शब्दरत्नेन्दुशेखरस्य भावप्रकाशटीकायां

930. शिवः शिवापदतलगः शवोऽपि सन्
भवन्महाम्बरमपि यो दिगम्बरः।
रमार्द्धभाक्तनुरपि मारमारकः
स वो भवो भवतु विभुर्विभूतिदः।।

—रुक्मिणीहरणे हरिदाससिद्धान्तवागीशभट्टाचार्यस्य

931. शुद्धानन्दचिदद्वयात्मवपुषं द्वैतेन्द्रजालास्पदम्।
वन्दे चन्द्रविभूषणं गिरिसुतादत्तार्द्धदेहं हरम्।।

—न्यायचन्द्रिकायां आनन्दपूर्णमुनीन्द्रस्य

932. शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणीति भयकृन्मूर्त्याद्भुतस्तुङ्गया।
रौद्रो दक्षविमर्दनेन हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसाश्रयः पशुपतिर्भूयात्सतां भूतये।।

—शृङ्गारतिलके रूद्रटस्य

933. शृङ्गारं हैमवत्या प्रथयति धनुषा वीरमास्येन हास्यं
बीभत्सं स्रक्कपालर्भयमहिपतिना भ्रूविजृम्भेण रौद्रम्।
कारुण्यं प्लुष्टपत्न्याद्भुतमरुणविधूषर्बुधैयोऽक्षिभाग्भिः
शान्तं चित्तेन भूयात्स नवरसमयः शङ्करः शर्मणे वः।।

—माधवभट्टस्य

934. शेषविभूषणमीडे शेषाशेषार्थलाभाय।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः।।

—लघुशब्दरत्नस्य टीकायां रत्नप्रकाशिकाख्यायां भैरवमिश्रस्य

935. शैत्यायादृत्य मूर्ध्ना रजनिकरकला जाह्नवी चोपनीता
यत्राङ्गोत्तापभीता पदमपि न जटाजूटतोऽधः प्रपेदे।
प्राणान्हातुं निपीतं विषमपि हृदयं नाविशद्दाहभीत्या
शम्भोः सत्या वियोगं तमपि शमितवत्यस्तु शान्तिः शिवाय।।

—भर्त्तृहरिनिर्वेदे हरिहरोपाध्यायस्य

936. शोणं पाणितले कलेवरमिदं गौरं गले श्यामलम्
विद्युत्पिङ्गलमीक्षणेनिटिलगे नेत्रद्वये पाटलम्।
राजत्कुण्डलिराजकुण्डलमलं शीतांशुखण्डोज्वलम्
वन्दे किञ्चन् शैलभूपतनयासौभाग्यभोग्यं महः।।

—शिवलीलामृते नित्यानन्दस्य

937. श्यामं शुभं स्वकुलदैवतमिद्धदीप्त्या
संभासयन्तमखिलान् समुपासकान् स्वान्।
सन्त्रास्य तं कलुषसंघमिहोपदेशैः
वन्दे जगन्नटनसूत्रधरं महेशम्।।

—भरतमुनिप्रणीतनाट्यशास्त्रस्य टीकायां
मधुसूदनी इत्याख्यायाम्

938. श्रियश्चिरं वश्शशिरांशुशेखर-
शिवः श्रितार्त्तिप्रतिबन्धकारणम्।
तनोतु सौवर्णकपर्दसुन्दरः
कुदर्पकन्दर्पमदप्रमर्दनः।।

—वेल्विकुडि—दानपत्राभिलेखे नेदुन्जोदैयनस्य

939. श्रियं स दद्याद्भवतां पुरारि-
र्यदङ्गतेजः प्रसरे भवानी।
विराजते निर्मलचन्द्रिकायां
महौषधीव ज्वलिता हिमाद्रौ।।

—शार्ङ्धरसंहितायाम्

940. श्रीकण्ठस्य सकृत्तिकार्तभरणी मूर्तिः सदारोहिणी
ज्येष्ठा भद्रपदा पुनर्वसुयुता चित्रा विशाखान्विता।
दिश्यादक्षतहस्तमूलघटिताषाढा मघालङ्कृता
श्रेयो वैश्रवणाश्रिता भगवतो नक्षत्रपालीव वः।।

—स्तुतिकु०

941. श्रीकान्तद्रुहिणोपमन्युतपनस्कन्देन्दुनद्यादयः
प्राचीना गुरवोऽपि यस्य करुणा लेशाद्गता गौरवम्।
तं सर्वादिगुरुं मनोजवपुषं मन्दस्मितालङ्कृतं
चिन्मुद्राकृतमुद्रपाणिनलिनं चित्ते शिवं कुर्महे।।

—शिखरिणीमालायाष्टीमकायां तत्त्वविवेकाख्यायाम् अप्पयदीक्षितस्य

942. श्रीगौर्यालिङ्गितं नित्यं चिदानन्दस्वरूपिणम्।
जगदानन्दबीजं तं नमामि परमेश्वरम्।।

—नीतिशास्त्रे

943. श्रीनाथ-वाक्पति-सुराधिप-सेविताङ्घ्रिः
सिन्दूर-भासुरतनुर्गिरिजा-सहायः।
कोटीर-शेखर-विधुः करुणा-रसाब्धि-
र्मां पालयेत् परशिवः प्रिय-शाक्वररथः।।

—नाट्यसर्वस्वदीपिकायां

944. श्रीमच्चन्द्रशिखामणिर्गिरिसुताबिम्बात्मतेजोमणिः
शश्वद्विश्वविभासकामलमणिर्ब्रह्माण्डचूडामणिः।
कालव्यालविषोपशान्तिदमणिश्चिन्तामणिश्शङ्करः
जीयान्मोहविभेदवासरमणिर्गोकर्णभूषामणिः।।

—न्यायकल्पलतिकायाम् आनन्दपूर्णमुनीन्द्रस्य

945. श्रीमत्या कल्पवल्येव हैमवत्या निरत्ययः।
जयत्यालिङ्गितः कल्पद्रुमः सत्फलदः शिवः।।

—मुहूर्त्तगणपतौ हरिशङ्करसुतगणपतेः

946. श्रीमद्वेदान्तवेद्यश्शुभगुणनिलयो निस्समस्सर्वदोष-
प्रत्यर्थीभूतमूर्त्तिश्चिदमितमहिमानन्दसत्यस्वरूपः।
सृष्टिस्थित्यन्तलीलस्सकलचिदचितां मोक्षदस्सर्वविद्या-
वेद्यो वागीशमूर्त्तिर्वृषभगिरिपतिःश्रेयसे स्यात्सदा नः।।

—वेङ्कटनाथमहादेशिककृत—तत्त्वमुक्ताकलापस्य
टीकायां आनन्ददायिनी इत्याख्यायां नृसिंहदेवस्य

947. श्रीमानकल्पत न कल्पतरुर्यदाप्त्यै
तृष्णा रसायनरसाय न यं समेत्य।
लभ्यो न यो गहनयोगहवैः स वोऽघ-
मप्राकृतो हरकृतो हरतु प्रसादः।।

—स्तुतिकु०

948. श्रीसाम्बं परमं वन्दे सर्वलोकैकदेशिकम्।
चराचराणां सृष्ट्यादिकर्त्तृत्वं यस्य तं विभुम्।।

—सुभाषितरत्नावल्याम्

949. श्रीः श्रयति यस्य कण्ठं
कृष्णं तं बिभ्रतं भुजे नागम्।
दधतं कं दाम जटालम्बं
शशिखण्डमण्डनं वन्दे।।

—रामचरिते सन्ध्याकरनन्दिनः

950. श्रुत्वा कान्तां विमलचरितां दक्षयज्ञे विदग्धा
जाता यस्य त्रिभुवनगुरोर्दीर्घकालं विरक्तिः।
नेत्राग्नौ तं मनसिजखलं दग्धवान् यश्च रुष्टः
सोऽयं कान्तागुणनिधिजितः पातु नित्यं महेशः।।

—स्मृतितरङ्गे

951. श्रेयांसि वो दिशतु यस्य सिताभ्रशुभ्रा
विभ्राजते सुरसरिद्वरमौलिमाला।
ऊर्ध्वेक्षणज्वलनतापविलीयमान-
चन्द्रामृतद्रविततामृतवाहिनीव।।

—सुभा० रत्नाकरस्य

952. षट्त्रिंशकात्मक- जगद्गगनावभास-
संविन्मरीचिचयचुम्बितबिम्बशोभम्।
षट्त्रिंशकं भरतसूत्रमिदं विवृण्वन्
वन्दे शिवं श्रुति-तदर्थविवेकिधाम।।

—अभिनवभारत्याम् अभिनवगुप्तस्य

953. सकलभुवनैकनाथो भवभयभिदुरो भवो भवानीशः।
विविधसमाधिविधिज्ञः सर्वज्ञो वः शिवायास्तु।।

—मयूरभञ्ज—ताम्रपत्राभिलेखे नरेन्द्रभञ्जदेवस्य

954. सकलभुवनोदयस्थितिलयमयलीलाविनोदनोद्युक्तः।
अन्तर्लीनविमर्शः पात महेशः प्रकाशमात्रतनुः।।

—कामकलाविलासे

955. सकलसुरमहेशं तत्त्वविद्योपदेशम्
करवलयितशेषं मोक्षलक्ष्मीनिवेशम्।
धृतललितविशेषं कर्णभूषाहिशेषम्
श्रितजटिलसुवेशं चिन्तये चिद्विशेषम्।।

—भानुदत्तकृत—रसमञ्जर्याष्टीकायां व्यङ्ग्यार्थकौमुदी इत्याख्यायां
त्र्यम्बकसुतानन्तपण्डितस्य

956. स जयति जगतां पतिः पिनाकी
स्मितरवगीतिषु यस्य दन्तकान्तिः।
द्युतिरिव तडितां निशि स्फुरन्ती
तिरयति च स्फुटयत्यदश्च विश्वम्।।

—मन्दसोर—अभिलेखे यशोधर्मणः

957. स जयति हिमकरलेखा चकास्ति यस्योमयोन्मुखा निहिता।
नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव।।

—वासवदत्ता—आख्यायिकायाम्

958. सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघन्यायप्रसूनाञ्जलिः।।

—कुसुमाञ्जल्यां उदयनाचार्यस्य

959. सत्यज्ञानसुखाद्वयोऽपि बहुधा रुपाणि बिभ्रच्चिरा-
दप्रज्ञेयविलासवैभवनिजाविद्याविधेयीकृतः।
आनन्दान्विषयोदितानुनुभवन्भूयः स्वया विद्यया
प्रश्लिष्टः परमार्थभोगमुदितः पायादुमायाः पतिः।।

—विद्यापरिणयने आनन्दरायमखिशर्मणः

960. सत्सेवितभृगुतुङ्गं विद्योतितवेदवेदाङ्गम्।
परिनर्तितभयरङ्गं मनसिजभङ्गं समाश्रये लिङ्गम्।।

—सुभा० सुधा० भा०

961. सदसत्त्वेन भावानां युक्ता या द्वितयी स्थितिः।
तामुल्लङ्घ्य तृतीयस्मै नमश्चित्राय शम्भवे।।

—चालुक्यराजअय्यणमहाकाव्ये

962. सन्ध्यानृत्यविधौ भुजङ्गमपतेर्गीतामृतं शृण्वतः
प्रत्यक्षिस्खलितप्रमोदसलिलस्तोमे तनौ सर्पति।
मौलेरुत्पथगा किमु त्रिपथगा जातेति शङ्काजुषो
देवस्य त्रिपुरान्तकस्य चकितं व्यालोकितं पातु वः।।

—गीतगौरीपत्यां भानुदत्तस्य

963. सन्ध्यावन्दनखिन्नमानसहता देवीति हित्वा द्रुतं
गूढं प्रेम च रक्षता तदुचितं व्यापारमातन्वता।
लीलानाट्यमिषादुदञ्चितपदन्यासं जटान्दोलन-
क्षुभ्यत्स्वस्तटिनीजलेन विभुना क्लृप्तोऽञ्जलिः पातुवः।।

—ययातिचरिते रुद्रदेवस्य

964. सन्ध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन्।
गौरीमुखार्पितमना विजयाहसितः शिवो जयति।।

—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

965. स पातु वो यस्य जटाकलापे
स्थितः शशाङ्कः स्फुटहारगौरः।
नीलोत्पलानामिव नालपुञ्जे
निद्रायमाणः शरदीव हंसः।।

—सुभा०

966. स पुनातु पिनाकी वो यच्छीर्षे स्वर्धुनीजलम्।
कीर्णं रेचकवातेन तारका प्रकरायितम्।।

—पर्वतीयपत्राभिलेखे वनमालवर्मदेवस्य

967. स भवतु शिवतातिर्वः शिवो यस्य कण्ठे
विलुलदमलमूर्त्तिर्भाति सर्पाधिनाथः।
गलगरलसमुच्छ्राकंदलीवस्रवद्भि-
र्मुकुटमणिसुधांशोर्बिन्दुभिर्वर्धिताङ्गः।।

—रसरत्नदीपे लक्ष्मीधरपण्डितसूनोर्धनेश्वरस्य

968. समस्तलक्षणायोग एव यस्योपलक्षणम्।
तस्मै नमोस्तु देवाय कस्मैचिदपि शम्भवे।।

—सुभा०

969. समारब्धं कार्यं भवति सफलं यत् करुणया
समापत्तिर्यस्य प्रभवति महाबाधहरणे।
समासन्ने यस्मिन्नखिलजडता याति विलयं
स नो गौरीनाथो जयति नितरां कीर्तिवसनः।।

—हरिरामतर्कवागीशकृत—ज्ञानलक्षणविचाररहस्यस्य
टीकायां विमर्शिनी इत्याख्यायां अनन्तकुमारभट्टस्य

970. सम्भवस्थितिसंहारकारणं वीतकारणः।
भूयादत्यन्तकामाय जगतां काममर्द्दनः।।

—पल्लव—अभिलेखे

971. सम्यग् ज्ञानादियुक्तः सकलगुणगणं क्षोभयित्वा प्रधानं
ब्रह्मादिस्थावरान्तञ्जगदिदमखिलं यो सृजद् विश्वरूपम्।
आजीव्यं सर्वपुंसां गिरितरुगहनं यः करोत्येकरुपम्
पायात्सोऽद्य प्रसन्नः स्मरतनुदहनच्छत्रचण्डेश्वरो वः।।

—अभिलेखे

972. स यत्र गुहबर्हिणो भवभुजङ्गजिह्वाश्चनै-
र्गजास्यकरकर्षणैः स च गिरीन्द्रकन्याहरिः।
स चार्कसुतसैरिभो रवितुरङ्गहेषारवै-
र्मुदं दधति धाम दद्दिशतु शाम्भवं धामः वः।।

—स्तुतिकु०

973. सर्गादौ सरसिजसम्भवादिदेवाः
सम्भूता यत इह पञ्चकृत्यभाजः।
ईशानं परवियति प्रकाशमानम्
तं वन्दे परमशिवं शिवासमेतम्।।

—अप्पयदीक्षितकृत—आत्मार्पणस्तुतेष्टीकायां
भावलेशप्रकाशाख्यायां शङ्करनारायणस्य

974. सर्वेसाधुजनाः सदायतहृदा सत्सम्प्रदाया-
दलं यज्ज्ञानाय कणादगौतममतान्यालोच्य।
तत्त्वार्थदान्वेदान्तान्परिशीलयन्ति रहसि स्वानन्दकन्दाङ्कुरम्
वन्दे तं जगदीश्वरं दयितया सानन्दमालिङ्गितम्।।

—रसमञ्जर्याष्टीकायां व्यङ्ग्यार्थकौमुदी इत्याख्यायां
त्र्यम्बकसूनु—अनन्तपण्डितस्य

975. सर्वः किलायमवशः पुरुषाणुकर्म-
कायादिकारणगणो यदनुग्रहेण।
विश्वप्रपञ्चरचना चतुरत्त्वमेति
स त्रायतां त्रिभुवनैकमहेश्वरो वः।।

—स्तुतिकु०

976. स वः पायाद्येन निन्ये वासुकिर्निजहारताम्।
तपोपायात्तनुं कोपाद्यः स्मरस्य जहार ताम्।।

—ईश्वरशतके अवतारकवेः

977. स शिवः पातु वो नित्यं यत्प्रपञ्चमहोदधौ।
उत्पद्यन्ते विलीयन्ते ब्रह्माद्याबुदबुदा इव।।

—प्रवरदीपिकायाम्

978. सानन्दं कैरवेन्दुप्रकरहिमसुधाहीरहिण्डीरगौरः
कान्तासंयुक्तदेहः सुरवरसहितः सादरं देवदेवः।
भोगीन्द्राबद्धचूडस्तुहिनकरकलाशेखरो भव्यमूर्ति-
मौंलौ यस्यास्ति गङ्गा स दिशतु जगतां मङ्गलं नृत्यनाथः।।

—उषाहरणनाटके जयभूपतीन्द्रमल्लस्य

979. सानन्दं घनसारकुन्दधवलो नागेन्द्र हारो
हरश्चन्द्रार्द्धाङ्कितशेखरो गिरिजया वामाङ्गसंशोभितः।
शूलीभूतिविलेपितस्त्रिनयनो गङ्गाधरस्सादरम्
दैत्यारण्यदवानलस्सुरनुतो नृत्येश्वरः पातु वः।।

—उषाहरणनाटके जयरभूपतीन्द्रमल्लदेवस्य

980. सानन्दं फणिवृन्दभूषिततनुश्चन्द्रावतंसो विभुः
स्फूर्ज्जद्दानवकं च भस्ममकरोत्स्वीये वरेणाधमम्।
चञ्चच्चामरकिन्नरीगणमुदा संवीजितं स्त्रीसमम्
पायात् नर्तनतालरक्षणपरो नृत्येश्वरस्सर्वदा।।

—अन्धकासुरवधोपाख्याने जयरणजित्मल्लस्य

981. सानन्दं स्मेरवक्त्रः शशधरवदनः कुन्दशङ्खेन्दुगौरो
नागेन्द्रावद्धचूडः सुरनगरनदीं मौलिदेशे दधानः।
वामाङ्गे शैलपुत्रीं रविशशिहुतभुग्लोचनो विश्ववन्द्यः
सृष्टिस्थित्यन्तकर्ता भवभयशमनः पातु वो नृत्यनाथः।।

—इन्द्रविजयनाटके जयरणजित्मल्लस्य

982. सानन्दं हिमकुन्दकैरवसुधा हिण्डीरपिण्डच्छविस्-
तारानायकशेखरो गिरिसुतावामाङ्गसंशोभितः।
शूली भूतिविलेपनस्सुरनुतो गङ्गाधरः कामदो
व्याघ्रत्वक्परिवीतसुन्दरकटिर्नृत्येश्वरः पातु वः।।

—मान्धात्र्युपाख्याने जयरणजित्मल्लस्य

983. सिद्धिस्साध्ये सतामस्तु प्रसादात्तस्य धूर्जटेः।
जाह्नवीफेनलेखेव यन्मूर्ध्नि शशिनः कला।।

—हितोपदेशे विष्णुशर्मणः

984. सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम्।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम्।।

—वृत्तरत्नाकरे भट्टकेदारस्य

985. सुप्तद्रुहिणगोविन्दचन्द्रेन्द्रधनदादिषु।
कल्पान्तरात्रिषु नमो यामिकाय यमारये।।

—सूक्तिमु० राजशेखरस्य

986. सुभगाविभ्रमोद्भ्रान्तभ्रूविलासचलाः श्रियः।
आकल्पं स्थिरतां यान्ति यद्वरात्स शिवोऽस्तु वः।।
—बृहत्कथामञ्जर्यां अष्टादशलम्बके क्षेमेन्द्रस्य

987. सुमेरुगिरिमूर्द्धनि प्रवरयोगबद्धासनं
जगत्रयविभूयते रविशशाङ्कनेत्रद्वयम्।
उमासहितमादरादुदयचन्द्रलक्ष्मीप्रदम्
सदाशिवमहन्नमाभि शिरसा जटाधारिणम्।।
—दानपत्राभिलेखे नन्दिवर्मपल्लवमल्लस्य

988. सुरनिवहनमस्यश्चन्द्रखण्डावतंसः
कुमुदविशदमूर्त्तिः शैलजालिङ्गिताङ्गः।
भुजगवलयहारी मन्मथध्वंसकारी
कलितदहननेत्रः पातु गङ्गाधरो वः।।
—मूलदेवशशिदेवोपाख्याननाटके भूपतीन्द्रमल्लस्य

989. सुवर्णगिरिकर्णके तरलतारकाकेसरे
चलज्जलदषट्पदे स्फुटदिगन्तपत्रास्तृते।
स वः प्रमथनायकः प्रदिशतु श्रियं यत्करः
करोति जगदम्बुजे चलितताललीलायितम्।।
—बृहत्कथामञ्जर्यां क्षेमेन्द्रस्य

990. सुवर्णपद्मिनीतटान्तदिव्यहर्म्यवासिने
सुपर्णवाहनप्रियाय सूर्यकोटितेजसे।
अपर्णया विहारिणे फणार्द्धचन्द्रधारिणे
सदा नमश्शिवाय ते सदा शिवाय शम्भवे।।
—पंतञ्जलिस्तोत्रे

991. सृष्टिस्थितिप्रलयरूपदशामुपेतो
यद्भ्रूविलासवशगोऽस्ति समस्तलोकः।

आनन्दकाननपतिं गिरिजापतिं तं
प्रारिप्सितं सपदि पूरयितुं नमामि।।

—श्रीहर्षकृत—नैषधीयचरितस्य टीकायां
चन्द्रकलाख्यायां शेषराजशर्मणः

992. सृष्ट्वाग्रे वियदादिकैस्सुरनृगोपक्ष्यादिकांश्चापराँ
श्चोत्पाद्यात्र च संप्रविश्य विविधं नामानि रुपाणि च।
व्याकृत्य स्थित एष कर्म निखिलं कुर्वन्निवालक्ष्यते
यस्तं नौमि विभुं चिदात्मकमजं वेदान्तवेद्यं शिवम्।।

—शौनकशिक्षाव्याख्यायाम्

993. सृष्ट्वारजःसत्वतमांसि विश्वं
निर्मातिपातिक्षयति स्वयं यः।
अशेषवृन्दारकवृन्दवन्द्यः
पायादपायान्मनुजान् गिरीशः।।

—पथ्यापथ्यविनिश्चये

994. सेवानमन्निखिलखेचरमौलिरत्न-
रश्मिच्छटापटलपाटलपादपीठः।
पुष्णातु धामकपिशीकृतशैलश्रृङ्ग-
त्वङ्गन्मृगाङ्कमधुराकृतिरीश्वरो वः।।

—स्तुतिकु०

995. सोमालङ्कृतमस्तु वस्तु कुशलस्तोमाय वामाङ्गके
छायाबालतृणालिचर्वणकलाचञ्चन्मृगाञ्चत्करम्।
सव्यार्द्धस्फुरदंशुजालकलमश्रेणीशिखाखण्डना-
कुण्ठोत्कण्ठशुकार्भकप्रविलसद्वामप्रकोष्ठाञ्चलम्।।

—आनन्दराघवनाटके राजचूडामणिदीक्षितस्य

996. सोमः सोमपवित्रिताधारदलैः संस्तूयते यो द्विजैः
सौम्यैः सामसमूहसंगविमलैः सोमार्च्चितस्सामगैः।
कैलासे कलकोकिलालिबहुले दैवैश्च दैत्यादिभिः
सोऽव्यात्सोमसुधावपुर्भुवि भवो भावान्वितो भक्तिदः।

—ब्रिटिशसङ्ग्रहालयस्थ—संस्कृताभिलेखे

997. संरब्धाङ्घ्रिनिवेशनादनिभृतं सर्वं सहाविग्रहे
वीतालम्बनमारसातलमधोविस्रंसिनि स्यन्दने।
याते दृक्पथदूरतां मयपुरे देवस्य भूतप्रभो-
र्द्राग्विश्वंभरबाणमोक्षविषयो यत्नः शिवायास्तु वः।।

—सदुक्ति० वैद्यगदाधरस्य

998. संव्यानांशुकपल्लवेषु तरलं वेणीगुणेषु स्थितं
मन्दं कञ्चुकसन्धिषु स्तनतटोत्सङ्गेषु दीप्तार्चिषम्।
आलोक्य त्रिपुरावरोधनवधूवर्गस्य धूमध्वजं
हस्तस्रस्तशरासनो विजयते देवो दयार्द्रेक्षणः।।

—सदुक्ति०. मयूरस्य

999. संसक्तो धरणीधरेश्वर भुवि क्रीडन्मृगाङ्काननश्रेणी-
माकलयन् गुणान्वय मिलत्पञ्चाननख्यातिमान्।
कान्तारागविनोदिनां निजपदं मुक्तामयन्दर्शयन्
भूयान्नित्यमनेकपापहतये श्रीकण्ठकण्ठीरवः।।

—चतुर्वर्गचिन्तामणिदाने

1000. संसारैकनिमित्ताय संसारैकविरोधिने।
नमः संसाररुपाय निःसंसाराय शम्भवे।।

—सुभा०

1001. स्थाणुर्वः पातु मूर्द्धा सर इव सततव्योमगङ्गाम्बुलोल-
स्फूर्जद्भोगीन्द्रपङ्कश्लथविकटजटाजूटकह्लारहारी।

मन्दं यत्र स्फुरन्त्यो धवलनरशिरोवारिजन्मान्तराल-
स्पष्टः प्रोद्यन्मृणालाङ्कुरसरस इवाभान्ति मौलीन्दुभासः।।
—कनकस्व—अभिलेखे शिवगणस्य

1002. स्थाणोरपर्णोल्लसितापि मूर्त्तिः
कल्पेत सा काम्यफलाप्तये नः।
बिभर्त्ति यां कोरकसम्प्ररोहम्
बालेन्दुना मौलिविभूषणेन।।
—प्रद्युम्नोत्तरचरिते मृत्युञ्जयस्य

1003. स्निग्धश्यामलवामभागकबरीभारप्रमानीलिम-
व्याप्तिप्राप्तकलिन्दजापदशिरोमन्दाकिनीसुन्दरः।
फालाक्षिज्वलनोष्णलब्धतपनीभावेन्दुचूडामणि-
गौरीविभ्रमलिप्तचन्दनसितग्रीवः शिवः पातु नः।।
—कुशकुमुद्वतीये अतिरात्रयाजिनः

1004. स्फुटं स्फटिकसप्रभं स्फुटितहाटकश्रीजटम्
शशाङ्कदलशेखरं कपिलफुल्लनेत्रत्रयम्।
तरक्षुवरकृत्तिमद्भुजगभूषणं भूतिम-
त्कदा नु शितिकण्ठ ते वपुरवेक्षते वीक्षणम्।।
—शिवस्तुतौ नारायणपण्डितस्य

1005. स्मितज्योत्स्नालेपोज्वलललितकण्ठः कचचयः
शिखिस्फूर्जत्पक्षेक्षणगलितनागो विलसितः।
मुदे चेलां दोलांशुगत इति भूषाप्रतिकृते-
र्धृतं गौर्याः शम्भुः स्फटिकरुचिदेहेतिरुचिरः।।
—राजाप्रशस्त्याभिलेखे

1006. स्मृत्वा यं प्रतिवासरं निजसखीवृन्दस्य गोत्रात्मजा
स्थित्वाऽग्रे निजलीलयाऽनुकरणं यस्याकरोदुन्मनाः।

वेशालङ्करणोक्तिगीतिगमने देवार्चने नर्त्तने
सोऽयं श्रीमदनान्तकः पशुपतिः कुर्याच्छिवं वः सदा।।

—भैरवानन्दनाटके मणिकवेः

1007. स्वयम्भूर्भूतानां स्थितिलयसमुत्पत्तिविधिषु
प्रयुक्तो येनाज्ञां वहति भुवनानां विधृतये।
पितृत्वं चानीतो जगति गरिमाणं गमयता
स शम्भुर्भूयांसि प्रतिदिशतु भद्राणि भवताम्।।

—मन्दसोर—अभिलेखे यशोधर्मणः

1008. हिमगिरितनयाकान्तं शशधरकलिकोत्तंसम्।
स्थितिलयजनिकर्त्तारं प्रणमत वरदं देवम्।।

—शिवसूत्रवार्त्तिके भट्टभास्करस्य

1009. हिमगिरितनयामयार्द्धमूर्त्तिस्तुहिनशिलासृतसिन्धुबद्धमौलिः।
शिशिरकरकलाकृतावतंसो हरतु शिवः परितापमान्तरं वः।।

—सूक्तिमु० उमापतिधरस्य

1010. हेतवे सर्वसिद्धीनां कल्मषक्षयहेतवे।
भवाब्धिसेतवे तुभ्यं नमोऽस्तु वृषकेतवे।

—बृहत्कथामञ्जर्यां क्षेमेन्द्रस्य

1011. हेयोपादेयशून्यं मुनिगणमनसामद्वयानन्दहेतुः
सेतुः संसारवारांनिधिसुखतरणे श्रीमहेशानसंज्ञम्।
प्रालेयं ज्योतिरन्तःपरिणततिमिरव्यूहविच्छेददक्षं
किञ्चिद्वाचामधीशं स्फुरतु मम हृदि त्र्यक्षरं विश्वसाक्षि।।

—सुभा०सुधा०भा०

1012. हेलाङ्गुष्ठाग्रपीडाभरनमदचलोत्संगसम्भारदूरे
भ्रश्यद्भूभारतिर्यग्दलितमणिफणामण्डले भोगिराजे।

तत्कालोद्भ्रान्तलोकत्रितयकृतमहास्तोत्रमन्त्रावतारः
पायाद् वः पार्वतीशः शमितदशशिरः शौर्यवीर्यावलेपः।।

—देवलप्रशस्ति—अभिलेखे लल्लस्य

1013. हैमवतीकरशाखामिलितकरोनीललोहितो जयति।
स्थाणुरपि भासमानः पल्लवितुं कृतसमारम्भः।।

—आर्यासप्तशत्यां विश्वेश्वरपंडितस्य

## अष्टमूर्त्तिः शिवः

1014. आधारो धरणी सुधांशुतरणी ह्लादप्रकाशप्रदा-
वाकाशस्त्ववकाशदोथ जगतः पाकप्रदः पावकः।
प्राणो वायुरथायुरम्बु हविषामाप्यायको दायको
यन्मूर्त्यष्टकभावितं जगदिदं पायात्स वः शङ्करः।।

—अभिलेखे गोवनतृतीयस्य

1015. आह्लायन्तं सुव्यक्तेर्नासया हृदि संविदा।
अभिवन्दे शिवं पुण्यं गन्धतन्मात्ररुपिणम्।।

—अभिनवभारत्यां षष्ठोध्याये अभिनवगुप्तस्य

1016. एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम्।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः।।

—मालविकाग्निमित्रे कालिदासस्य

1017. गङ्गातरङ्गतनुशीकरतारकाभिः
संसेव्यमानहिमरश्मिकलाकिरीटम्।
अर्द्धाङ्गकान्तमणिमादि गुणोल्लसन्त-
माराधयामि मनसा शिवमष्टमूर्त्तिम्।।

—सिरसा—अभिलेखे

1018. जगज्जीवन्नमव्याद्वः शम्भोरम्भोमयं वपुः।
ब्रह्माण्डमपि यस्यान्तस्तरत्तुम्बीफलायते।।

—सूक्तिमु०

1019. त्रैलोक्यसौधशिल्पी यस्त्रिवेदीवाक्यसत्कविः।
नित्यप्रयत्नबोधेच्छः सोऽष्टमूर्त्तिः श्रियेस्तु वः।।

—तेवर—प्रस्तराभिलेखे गयाकर्णदेवस्य

1020. दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते
यत्रामुष्य सुधी भवन्ति किरणा राशेः स यासामभूत्।
यस्तत्पित्तमुषः सु योस्य विधये यस्तस्य जीवातवे
वोढा यद्गुणमोषमन्मथरिपोस्ताः पान्तु वो मूर्त्तयः।।

—सदुक्ति० चित्तपस्य

1021. पयोदानां पन्थाः कवलविषयो वा परिमलं
वहन् बिभ्राणो वा सुहृदपसुहृद्वा जलरुहाम्।
ददद्गृह्णानो वा हविरिति मुहुर्यस्य विबुधाः
स्तुवन्त्यष्टौ मूर्त्तीः स जगदवतादन्धकरिपुः।।

—सदुक्ति० श्रीहनूमतः

1022. मौलिं नेनेक्ति भालं तिलकयति तनोरङ्गरागं विधत्ते
धम्मिल्लं संदधाति प्रथयति शिरसि व्यक्तमुत्तंसलक्ष्मीं।
संप्रीणीते भुजङ्गानपनयति रसं वेत्ति संमोदमुद्रां
याभिः श्रृङ्गारबन्धस्तनुभिरिव शिवस्ताभिरस्तु श्रिये वः।।

—सदुक्ति० जलचन्द्रस्य

1023. यदाप्यायपरा लोकाः स्वे-स्वे कर्मणि सङ्गताः।
प्राप्नुवन्ति फलं वन्दे तत्तेजोवपुरैश्वरम्।।

—अभिनवभारत्यां तृतीयोध्याये अभिनवगुप्तस्य

1024. या सृष्टिः स्रस्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनःप्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।

—अभिज्ञानशाकुन्तले कालिदासस्य

1025. यां धम्मिल्लपदेऽभिषिञ्चति यया सन्ध्यासु बद्धाञ्जलि-
र्यामायम्य यदात्मकानि नयनान्यामील्य यां ध्यायति।
यां च स्यन्दनतां निनाय सहितस्ताभिः स्वयं मूर्त्तिभि-
र्देवो विश्वतनुः पुनातु स जगच्चन्द्रार्धचूडामणिः।।

—सदुक्ति० सुधाकरस्य

1026. वक्त्रं शीतकरोधरो घनरसः कामप्रदो विग्रहः
श्वासो गन्धवहः सरोरूहसुहृत्पाणिः स्मिताभा शुचिः।
वक्षः पीनपयोधराधिकरणं पृथ्वी नितम्बस्थली-
त्यष्टौ धूर्जटिमूर्त्तयः स्मरभयाद्दुर्गाश्रिताः पान्तु वः।।

—शा०प० दवेश्वरस्य

1027. विश्वबीजप्ररोहार्थं मूलाधारतया स्थितम्।
धर्त्तृशक्तिमयं वन्दे धरणीरूपमीश्वरम्।।

—अभिनवभारत्यां प्रथमाध्याये अभिनवगुप्तस्य

1028. संसारनाट्यजनन-धातृबीजलताजुषीम्।
जलमूर्त्तिं शिवां पत्युः सरसां पर्युपास्महे।।

—अभिनवभारत्यां द्वितीयोध्याये अभिनवगुप्तस्य

**1029.** संसारनाट्यनिर्माणे याऽवकाश विधानतः।
पूर्वरङ्गायते व्योममूर्त्तिं तां शाङ्करी नुमः।।
—अभिनवभारत्यां पञ्चमाध्याये अभिनवगुप्तस्य

**1030.** स्थायी प्रबुद्धहृदये व्यभिचारिभूतः
कामाकुलासु जनतासु महानुभावः।
अन्तर्विभावविषयो रसमात्रमूर्त्तिः
श्रीमान्प्रसन्नहृदयोऽस्तु मम त्रिनेत्रः।।
—अभिनवभारत्यां सप्तमोऽध्याये अभिनवगुप्तस्य

**1031.** स्वविलासैरिदं विश्वं यो दर्शयति सन्ततम्।
वायुमूर्त्तिं शिवं वन्दे गिरिराजसुताप्रियम्।।
—अभिनवभारत्यां चतुर्थोध्याये अभिनवगुप्तस्य

## दक्षिणामूर्त्तिः शिवः

**1032.** करयुगलयुगल्या वित्तिमुद्राक्षमाले
कलशममृतपूर्णं पुस्तकं बिभ्रदाद्ये।
स्फटिकविशदवर्णो भद्रपीठे निषण्णो
दिशतु विशदबुद्धिं दक्षिणामूर्त्तिदेवः।।
—वाक्यार्थरत्नस्य सोपज्ञटीकायां सुवर्णमुद्रिकाख्यायां अहोबलस्य

**1033.** प्रोद्यच्छाखमहावटद्रुमतटे योगासनस्थं प्रभुं
प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिशं प्रोद्वीक्ष्यमाणाननम्।
मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवम्
हृद्यन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्त्तिकम्।।
—मानसोल्लासस्य सोपज्ञटीकायां वृत्तान्तविलासाख्यायां रामतीर्थस्य

**1034.** वटविटपिसमीपे भूमिभागे निषण्णं
सकलमुनिजनानां ज्ञानदातारमारात्।

त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं
जननमरणदुःखच्छेददक्षं नमामि।।

—दक्षिणामूर्त्तिव्याख्यानमातृकायां स्फुटश्लोकः

1035. वन्दे गुरुं शिवं साम्बं दक्षिणामूर्तिमव्ययम्
यद्वन्दनेन मन्दोऽपि विन्देद्गुरुसमानताम्।
अम्बिकाहृदयाम्भोजमरन्दास्वादबम्भर
वन्दारुकविमन्दार पाहि मां भव शङ्कर।।

—काशिकातिलके नीलकण्ठभट्टस्य

## भैरवः शिवः

1036. एकाम्भोधीकृतायां भुवि जगदखिलं निर्जनीकृत खेल-
न्देवः कालीसहायः प्रसभविहरणोन्मुक्तलीलाट्टहासः।
सद्यो दंष्ट्राशुभिन्ने तमसि निजवपुर्बिम्बिमालोक्य कस्त्वं
कस्त्वं ब्रूहीति कोपादभिदधदभयं भैरवश्चेष्टतां वः।।

—सदुक्ति० वैद्यगदाधरस्य

1037. कल्पान्ते शयितत्रिविक्रममहाकङ्कालदन्ती स्फुर-
च्छेषस्यूतनृसिंहपाणिनखरप्रोतादिकोलामिषः।
विश्वैकार्णवतानितान्तमुदितौ तौ मत्स्यकूर्मावुभौ
कर्षन् धीवरतां गतोऽस्यतु महामोहं महाभैरवः।।

—सदुक्ति० चित्तपस्य

1038. खट्वाङ्गीकृतधूमकेतुघटितप्रेताधिराट्पञ्जर-
प्रोतब्रह्मशिरः कपालवलयं बिभ्रज्जटामण्डलम्।
कण्ठे सप्तमहर्षिवक्त्ररचितामेकावलीमुद्वहन्
पायाद्वः सुलभव्रतोपकरणः कल्पान्तकापालिकः।।

—सदुक्ति०

1039. तत्कालारभटीविजृम्भणपरित्रासादिव भ्रश्यता
वामार्द्धेन तदेकशेषकरणं बिभ्रद्वपुर्भैरवम्।
तुल्यं चाब्धिभुजङ्गभूषणमसौ भोगीन्द्रकङ्कालकै-
र्बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः।।

—सुभा०सुधा०भा०

1040. दिव्याङ्गश्चन्द्रचूडः स्फुरदुरगवरालङ्कृतो दोःसु-
बिभ्रत्खड्गं पात्रं त्रिशूलं डमरुमखिलभी वारणो विश्वहेतुः।
योगेश्वर्या स्वशक्त्या हलमुसलसुरापात्रखड्गस्फुरद्दो-
र्वल्यामुत्कश्चिदात्मा जयति परिशवो भैरवो बालवेषः।।

—बटुकभास्करे रमानाथस्य

1041. नमोस्त्वव्याजकरुणासिन्धवे परमात्मने।
निजभक्तविपच्छेदधृतभैरवमूर्त्तये।।

—कर्त्तव्यदीक्षापद्धतौ

1042. वैकुण्ठस्य करङ्कमङ्कनिहितं स्रष्टुः कपालं करे
प्रत्यङ्गं च विभूषणं विरचितं नाकौकसां कीकसैः।
भस्मस्थावरजङ्गमस्य जगतः शुभ्रं तनौ बिभ्रतः
कल्पान्तेषु कपालिनो विजयते रौद्रं कपालव्रतम्।।

—सदुक्ति० भवभूतेः

1043. सद्यः प्रध्वस्तदेवासुरसरसशिरःश्रेणिशोणारविन्द-
स्रग्दामानद्धमूर्तेर्धनरुधिरकणक्लिन्नचर्मांशुकस्य।
निष्पर्यायत्रिलोकीभवकवलरसव्यात्तवक्त्रस्य जीया-
दानन्दः कालरात्रीकुचकलसपरीरम्भिणो भैरवस्य।।

—सदुक्ति० उपापतिधरस्य

1044. संहारकालहुतभुग्विकरालघोर-
सम्भ्रान्तकिङ्करकृतान्तनितान्तभिन्नम्।

भिन्नान्धकासुरमहागहनातपत्तं
तद्भैरवं हरवपुर्भवतः प्रायतु।।

—बौद्ध—दानपत्राभिलेखे रणभञ्जदेवस्य

## मृत्युञ्जयः शिवः

1045. पीयूषरत्नकलशान्वितहस्तयुग्मो
मृत्युञ्जयो जयति चन्द्रकलावतंसः।
मृत्युं विजित्य निजपादसरोजयुग्म-
च्छायाश्रितान् सपदि रक्षति यो दयाब्धिः।।

—अमरमार्कण्डेये शङ्करलालशस्त्रिणः

## अर्द्धनारीश्वरः

1046. अच्छिन्नमेखलमलब्धदृढोपगूढ-
मप्राप्तचुम्बनमवीक्षितवक्त्रकान्ति।
कान्ताविमिश्रवपुषः कृतविप्रलम्भ
सम्भोगसख्यमिव पातु वपुः पुरारेः।।

—शृङ्गारप्रकाशे भोजदेवस्य

1047. अम्भोजे स्वर्णरम्भा तदुपरि पुलिनं तत्रकूपोऽत्ररिङ्गत्
कालिन्दी तत्रमेरुस्तदुपरि च शशी तत्र गाढान्धकारः।
तत्रोद्यत्सूर्यकोटिस्त्रिनयनविधृतार्द्धाङ्गमव्याजमव्या-
दन्यद्भस्मोरगग्लौसुकृतिनरशिरोरत्नमालाभिरामम्।।

—कुण्डरत्नाकरे विश्वनाथस्य

1048. अर्द्धं दन्तच्छदस्य स्फुरति जपवशादर्द्धमप्युत्प्रकोपा-
देकः पाणिः प्रणन्तु शिरसि कृतपदः क्षेप्तुमन्यस्तमेव।
एकं ध्यानान्निमीलत्यपरमविकसद्वीक्षते नेत्रमित्थं
तुल्यानिच्छाविधित्सा तनुरवतु स वो यस्य सन्ध्याविधाने।।

—सदुक्ति०

1049. अर्द्धाङ्गीकृतदाम्पत्यमपि गाढानुरागि यत्।
पितृभ्यां जगतस्तस्मै कस्मै चिन्महसे नमः।।

—भारविकृत—किरातार्जुनीयस्य टीकायां
घण्टापथाख्यायां मल्लिनाथस्य

1050. अर्द्धाङ्गे गिरिराजरत्नतनया पूर्णेन्दुबिम्बानना
गङ्गापन्नगभस्मपावककलाचर्म्माम्बरं वान्यतः।
देवानां निकरैर्निषेव्य नितरां संस्तूयतेऽहर्निशम्
सोऽयं शाश्वतिकं सुखं वितनुतां श्रीसाम्बमूर्तिः शिवः।।

—कर्णकुतूहले भोलानाथस्य

1051. आश्लेषाधरबिम्बचुम्बनसुखालापस्मितान्यासतां
दूरे तावदिदं मिथो न सुलभं जातं मुखालोकनम्।
इत्थं व्यर्थकृतैकदेहघटनाविन्यासयोरावयोः
केयं प्रीति विडम्बनेत्यवतु वः स्मेरोर्द्धनारीश्वरः।।

—सदुक्ति०

1052. उदरद्वयभरणभयादर्द्धाङ्गाहितदारः।
यदि नैवं तस्यैकसुतः कथमद्यापि कुमारः।।

—शा०प० सार्वभौमस्य

1053. एकेन यस्य यमिनः प्रमदेव देह-
मर्द्धेन राजति पुमानिवचापरेण।
तत्त्वक्रमादथ च न प्रमदा पुमान्वा
श्रेयांसि वर्द्धयतु स स्मरशासनो वः।।

—सरस्वतीकण्ठाभरणस्य टीकायां रत्नदर्पणाख्यायां रत्नेश्वरस्य

1054. कल्याणमावहतु वः शिवयोस्तदेकं
गात्रं यदीयमसितच्छविकण्ठमूलम्।

वामेतरेऽपि कुरुते सितभासि भागे
प्रारब्धशैलतनयापरिणामशङ्काम् ।।

—भिक्षाटनकाव्ये उत्प्रेक्षावल्लभकवेः

1055. कल्याणं कलयन्तु भूरि शिवयोः कल्याणवेद्यां मिथो
लज्जाकूतदरोदयादसकलं पर्यायतः पश्यतोः।
फुल्लेन्दीवरपुण्डरीकरुचिभिर्नीलामलार्द्धं वपुः
कुर्वद्भिः समभावि भाविचरितं यैस्ते कटाक्षाङ्कुराः।।

—गोदवर्मयशोभूषणे अरुणगिरेः

1056. कान्ते कृतागसिरुषा परुषं ब्रुवाणाम्
कुण्ठीकृतार्थरसनार्द्धनियन्त्रणेन।
मौनेनमानमधिगच्छति या ददातु
सा पार्वतीहरविभक्ततनुः शिवं वः।।

—बालग्रहहरणे

1057. गङ्गाम्भोबिन्दुरिङ्गत्पटुतरलहरीलास्यलीलाभिरिन्दोः
सन्दोहैश्चन्द्रिकाणां किमपि सपुलकं सान्द्रमुद्दीपितस्य।
कान्तायाः कान्तकण्ठस्थलबहलभुजाश्लेषमुग्धाविलासाः
कल्याणं वर्द्धयन्तां प्रियसुखवसतेरर्द्धनारीश्वरस्य।।

—रसिकजीवने रामानन्दपतित्रिपाठिनः

1058. गिरिसुताहरयोरविभिन्नयो-
र्विहरतोर्न्नियमार्थमवन्तु वः।
सरसयावकभस्मविचित्रिता-
त्रिपथगापुलिने पदपङ्क्तयः।।

—राष्ट्रकूट—अभिलेखे

1059. गोकर्णराडाभरणं यदीयं यद्गव्यहव्यादजमाददाह।
कुम्भेन चूडामणिरायुगान्तं पायादपायाद्गिरिजार्द्धमूर्तिः।।

—परिभाषावृत्तिकारिकायाम्

1060. चन्द्रालोकय पश्य पन्नगपते वीक्षध्वमेतद्गणाः
कामारेः स्तनभारमन्थरमुरो लाक्षारुणाङ्घ्रिश्रियः।
आकर्ण्य त्रिदशापगागिरमिमां सोल्लासमाभाषितां
व्रीडास्मेरनताननो विजयते कान्तार्द्धनारीश्वरः।।

—सदुक्ति० योगेश्वरस्य

1061. जटाजूटे बिभ्रत्क्वचिदपरभृङ्गीभृतकच-
स्तथैकस्मिन् भागे भसितमपरत्राप्तघुसृणः।
फणीन्द्रं कस्मिँश्चिन्मणिगणधरोऽन्यत्र भगवान्
गिरीशः श्रेयो नः प्रदिशतु शिवामिश्रितवपुः।।

—तत्त्वदीपने अखण्डानन्दमुनेः

1062. तिर्यङ्मात्रप्रवणनयनोपान्तदृश्यत्वलोभा-
दन्योन्यार्द्धावयवघटितं स्वाङ्गमाधायि याम्याम्।
तौ सद्रूपावपि जनकतां जन्यमात्रे भजन्तौ
देवावाद्यौ जगति जयतः प्रेमसीमायमानौ।।

—रसचन्द्रिकायां विश्वेश्वरपण्डितस्य

1063. देहाद्वयार्द्धघटनारचितं शरीरमेकं
ययोरनुपलक्षितसन्धिभेदम्।
वन्दे सुदुर्घटकथापरिशेषसिद्ध्यै
सृष्टेर्गुरूगिरिसुतापरमेश्वरौ तौ।।

—कादम्बरी—उत्तरभागे बाणभट्टसूनोः

1064. देहार्द्धयोगः शिवयोः सश्रेयांसि तनोतु वः।
दुःप्रापमपि यत् स्मृत्याजनः कैवल्यमश्नुते।।

—राजमार्तण्डे धारेश्वरस्य

1065. धत्ते नावनतिं महीधरसुताभागावरुद्धं शिरो
नैवोदञ्चति चारुसान्त्वनवचो मूकायितेऽर्द्धे मुखे।
आश्लेषोऽपि यथोचितं न हि भवत्येकाकिना बाहुना
मामव्यादिति विक्लवः प्रियतमामानापनोदे शिवः।।

—तत्त्वचिन्तामणेष्टीकायां आलोकदर्पणाख्यायां
महेशठाकुरस्य

1066. धम्मिल्लं च जटां च मौक्तिकसरं चाहिं च रत्नानि च
ब्रह्मास्थीनि च कुङ्कुमं च नृशिरश्चूर्णोत्तरं भस्म च।
क्षौमं च द्विपचर्म चैकवपुषा बिभ्रद्दिशन्नेकतां
भावानामिव योगिनां दिशतु वः श्रेयोऽर्धनारीश्वरः।।

—सदुक्ति० शङ्करदेवस्य

1067. न स्वैरस्मितचारुचुम्बनमनायासेन नो भाषण-
न्नैवान्योन्यविलोकनन्न च परीरम्भोऽपि सम्भाव्यते।
इत्थं क्लेशवशेन सङ्गमकृते भिन्नं वपुर्वाञ्छतो-
र्भूयास्तां जगतां शिवाय शिवयोर्व्यग्रे चिरं चेतसी।।

—रसतरङ्गिण्यां रामानन्दस्य

1068. पादो दक्षिण एष गच्छति पदं यत्रैव नाट्येच्छया
तत्रैवेच्छति नाम वामचरणः सञ्चारसंस्कारतः।
इत्थं मण्डलमण्डिता समपदां चारीं नरीनर्ति यः
सन्ध्यायां स सदा ददातु सुखितां देवोऽर्द्धनारीश्वरः।।

—जैनराजतरङ्गिण्यां श्रीवरस्य

1069. प्रेम्णार्द्धं वपुषो विलोक्य मिलितं देव्या समं स्वामिनो
मौलौ यस्य निशापतिर्नगसुतावेणीनिशामिश्रितः।
आस्ते स्वाम्यनुवर्तनार्थमिव तत् कृत्वा वपुः खण्डितं
देयादद्वयभावनां स भगवान् देवोऽर्द्धनारीश्वरः।।

—जैनराजतरङ्गिण्यां श्रीवरस्य

1070. प्रौढप्रेमरसादभेदघटितामङ्के दधानः प्रियां
देवः पातु जगन्ति केलिकलहे तस्याः प्रसादाय यः।
व्याहर्त्तुं प्रणयोचितं नमयितुं मूर्धानमप्यक्षमो
धत्ते केवलमेव वामचरणाम्भोजे करं दक्षिणम्।।

—सदुक्ति० गदाधरस्य

1071. बिभ्राणा केशपाशं शबलितमिव मन्दारमन्दाकिनीभ्याम्
भाले बालप्रवालारुणनयनसृजत्सामिसिन्दूरबिन्दुः।
शम्भोर्नीहारसारोरगपतिकलिता शेषहारार्द्धपूर्ति-
र्मूर्तिर्गौरीशरीरावयवसमसस्तासमस्तार्थदाऽस्तु।।

—हनुमत्कविप्रणीत—खण्डप्रशस्तेष्टीकायां पञ्ज्या—
इत्याख्यायां श्रीकीकापण्डितस्य

1072. बीजावापमुपेयिवान् स्मृतिवशाद् रागोष्मणाद्भेदवा-
नन्योन्यस्य कराङ्गुलीघटनया प्राप्तप्रवालोद्गमः।
विस्रम्भेण विकासवान् सफलतामैक्येन सम्भावयन्
कल्याणं भवतां करोतु शिवयोरानन्दकल्पद्रुमः।।

—कुवलयावल्यां शिङ्गभूपालस्य

1073. मन्दारमालाकुलितालकायै कपालमालाङ्कित्तशेखराय।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय।।

—हरितालिकाव्रतकथायाम्

1074. मातापितृभ्यां जगतो नमो वामार्द्धजानये।
सद्यो दक्षिणदृक्पातसञ्कुचद्वामदृष्टये।।

—रघुवंशस्य टीकायां सञ्जीवनी
-इत्याख्यायां मल्लिनाथस्य

1075. मिश्रीभूतां तव तनुलतां बिभ्रतो गौरि कामं
देवस्य स्यादविरलपरीरम्भजन्मा प्रमोदः।
किन्तु प्रेमस्तिमितमधुरस्निग्धमुग्धा न दृष्टि-
र्दृष्टेत्यन्तःकरणमसकृत्ताम्यति त्र्यम्बकस्य।।

—सदुक्ति० भगीरथस्य

1076. मौनादस्तमितैव चाटुभणितिस्त्रस्तैकहस्ताद्गतं
दूरेऽप्यञ्जलिबन्धनं प्रणमनं स्तब्धार्द्धमूर्ध्नः कुतः।
इत्थं संघटितैकविग्रहतया व्यग्रो गिरिग्रामणी –
र्जायाजातरुषं जयत्यनुनयन्देवस्त्रिलोकीगुरुः।।

—सुभा० सुधा० भा०

1077. ये सीमन्तितभस्मगात्ररजसो ये कुम्भकद्वेषिणो
ये लीढा श्रवणाश्रयेण फणिना ये चन्द्रशैत्यद्रुहः।
ते रुष्यद्गिरिजाविभक्तवपुषः चित्तव्यथा साक्षिणः
स्थाणोर्दक्षिणनासिकापुटभुवः श्वासानिलाः पान्तु वः।।

—प्रचण्डपाण्डवे राजशेखरस्य

1078. यो धत्ते निजमाययैव भुवनाकारं विकारोज्झितो
यस्याङ्गः करुणाकटाक्षविभवौ स्वर्गापवर्गाभिधौ।
प्रत्यग्बोधमुखाद्वयं हृदि सदा पश्यन्ति यं योगिनः
तस्मै शैलसुतान्विताऱ्द्धवपुषे शश्वन्नमस्तेजसे।।

—स्वराज्यसिद्धिव्याख्यायां गङ्गाधरसरस्वत्याः

1079. राजत्कुञ्जरराजकृत्तिविमलोदञ्चद्दुकूलावृतं
शश्वद्भोगिफणामणिप्रविलसन्मुक्तामणि ग्रामणि।
पादाम्भोजभुजङ्गफूत्कृतिरणन्मञ्जीरमञ्जुद्युति
श्रेयो वः शिवशैलराजसुतयोर्द्देयादभिन्नं वपुः।।

—वाग्भूषणे दामोदरस्य

1080. वन्दे तमर्द्धयुवतीश्वरमादिदेव-
मिन्दीवरोरगफणामणिकर्णपूरम्।
उत्तुङ्गपीनकुचकुङ्कुमभस्मभिन्नं
श्रृङ्गाररौद्ररसयोरिव सर्गमेकम्।।

—खोनमुखपत्राभिलेखे धर्मपालस्य

1081. वन्दे तं परमानन्दं वामार्द्धेनोमया युतम्।
रज्जौ भुजङ्गवद्यत्र विवरीवृत्यते जगत्।।

—अमरकोशस्य टीकायां महेश्वरस्य

1082. वामे भावाभिनयसुषमालङ्कृतां लास्यभङ्गी-
मर्धेऽन्यस्मिन्नुदितडमरुं बिभ्रतस्ताण्डवं च।
स्वस्वक्षेत्रव्यवहृतकरा लोकदत्तावधानाः
शम्भोः कान्ताकलितवपुषो दृष्टयः पान्तु युष्मान्।।

—नृत्यरत्नावल्यां जायसेनापतेः

1083. विद्युद्गौरः किशोरः सकलतनुभृतां चित्तचिन्तैकचोरो
रोलम्बस्त्र्यम्बकस्यस्मितसरसिरुहां स्मेरवक्त्रेन्दुबिम्बः।
उद्यच्चन्द्रावतंसस्तुहिनगिरिमिलन्मेरुशोभाविडम्बो
देहार्द्धो वः परार्द्धे वितरतु विभवं मल्लचन्द्रार्द्धमौलेः।।

—शार्ङ्गधरसंहितायां शार्ङ्गधरस्य

1084. विरुद्धधर्मद्वयसन्निपातेऽप्यभेद एवेति विभावयन्तम्।
पुनातु भेदप्रतिभासशून्यं स्त्रीपुंसरुपं शिवयोः शरीरम्।।

—खण्डनखण्डखाद्ये श्रीहर्षस्य

1085. शृङ्गारहास्यकलितैश्शिवया कलितश्शिवः कटाक्षौघैः।
व्यक्तं सितासितवपुः पुनातु तीर्थाधिराज इव।।

—गङ्गावतरणचम्प्वां पञ्चमोच्छ्वासे बालकृष्णसूनुशङ्करस्य

1086. शंकरोतु शिवायत्तदेहार्द्धः शशिशेखरः।
महात्मा वो भवाम्भोधिमग्नलोकाभयप्रदः।।

—खण्डेल—अभिलेखे

1087. श्रुत्वा दक्षादलीकं प्रियकलुषमतिव्यस्तयासद्य एव
त्यक्ते सत्यासुदेहे प्रभुरपि न वधूंस्वीचकारापरां यः।
तामेव प्राप्य भूयो नगजनजनितामर्द्धनारीश्वरोऽभूत्
स प्रेमाद्वैतवादी कलयतु भवतामृद्धिमर्द्धेन्दुमौलिः।।

—कुवलयाश्वीये कृष्णदत्तस्य

1088. श्रेयो भूयो विदध्यादखिलदिगधिपान्वासवादीन्विजित्य
प्राप्तां भूभृत्तनूजां रजतगिरितटीं त्रिस्तनी द्राग्विविज्य।
आहृत्येव त्रिलोकीविजयजविरुदाकारमद्यापि यस्त-
त्तार्तीयीकं दधानस्स्तनमुरसि विभात्यर्द्धनारीश्वरो नः।।

—राजचूडामणिदीक्षितकृत— रुक्मिणीकल्याणस्य टीकायां
मौक्तिकमालिकायां बालयज्ञदेवेश्वरस्य

1089. स जयति गिरिकन्यामिश्रिताश्चर्यमूर्ति-
स्त्रिपुरयुवतिलीलाविभ्रमभ्रंशहेतुः।
उपचयवति यस्य प्रोन्नतैकस्तनत्वा-
दुपरि भुजगहारः स्थानवैषम्यमेति।।

—सदुक्ति० माघस्य

1090. सन्ध्यानतौ नरपुरन्ध्रितनोः सशेष-
मुत्सारिते गिरिजया निजपाणिपद्मे।
उत्सर्पिकङ्कणफणीन्द्रफणार्पणेन
पूर्णाञ्जलिर्जयति बालमृगाङ्कमौलेः।।

—सुभा० सुधा० भा०

1091. सामिनीलोत्पलश्यामं वपुर्यस्य विभाति सः।
यामिनीदयितद्योतमानः सोऽस्तु शिवाय वः।।

—रसमञ्जर्याष्टीकायां प्रकाशाख्यायां
शिवभट्टसूनोर्नागेशभट्टस्य

1092. सार्द्धं रक्तमनञ्जनं हि नयनं सार्द्धं पुनः साञ्जनम्
केशार्द्धं तु जटीकृतं तदपरं वेणीकृतं राजते।
श्रोत्रं रत्नविभूषितं तदपरं रुद्राक्षमालाधरं
वक्षो वामकुचोन्नतं वपुरहो गौरं सितं चाभितः।।

—काव्यप्रकाशस्य टीकायां सुधासागराख्यायां भीमसेनदीक्षितस्य

1093. स्फुरदधरमधूलीस्वादनायात्तपञ्चा-
नन इत दशबाहुर्गाढमालिङ्गनाय।
तदपि बहुलतृष्णः शैलजायाः शिवोऽयं
सुखयतु विदधानस्त्वर्द्धनारीश्वरत्वम्।।

—अमरकाव्ये रणछोड्भट्टस्य

1094. हरकोपानलेनैव भस्मीभूयाकरोत्स्मरः।
अर्द्धं नारीशरीरं हि यस्य तस्मै नमोऽस्तुते।।

—स्मरदीपिकायाम्

# पार्वतीपरमेश्वरौ

1095. अद्‌भुतं किमपि द्वन्द्वमस्तु तन्मम शर्मणे।
स्वस्तिकस्तनुते यस्य सदृगाश्लेषनिर्वृतिम्।।

—नलचरित्रे नीलकण्ठस्य

1096. अव्यात्स वस्ताण्डवविभ्रमेण
मौलो विलीना हरिणाङ्कलेखा।
सा यस्य वामे कुचमण्डलाग्रे-
कर्पूरपत्राङ्कुरटङ्कमेति।।

—राजेन्द्रकर्णपूरे महाकविशम्भोः

1097. एको देवः स जयति शिवः केवलज्ञानमूर्त्ति-
र्देवी सा च त्रिभुवनमिदं यद्विभूतिप्रपञ्चः।
यत्कूटस्थं मिथुनमविनाभावसम्बन्धयोगा-
न्मिश्रीभूतं तदखिलजगज्जन्मबीजं नमामि।।

—अमरेश्वरमन्दिरस्थहलायुधस्तोत्रे

1098. ऐक्यं भजेते भुवनेष्वर्थतः शब्दतश्च यौ।
भूयास्तामनिशं तौ मे भूयसे श्रेयसे शिवौ।।

—जानकीपरिणये चक्रकवेः

1099. कर्षन्तावितरेतस्य मनसी बद्ध्वेव विद्ध्वेव ते
सम्मोदन्ददतावथांऽशु सुधयाऽसिच्येव हर्षं प्रदौ।
किञ्चित्सङ्कुचितौ पुनर्विकसितौ श्वेतौ शितीलोहितौ
पातामीश्वरयोस्तरङ्गतरलौ लोकान् कटाक्षावुभौ।।

—गीतगिरीशे नृपतिरामभट्टस्य

1100. कल्याणं कलयन्तु साधु जगतां देवाँश्च देवीरपि
त्यक्त्वान्योन्यसमागतैकमनसोः संयापितानेहसोः।

तत्तादृङ्निजयोगवैभवकलासंसिद्धिसंयोगयो-
र्गाढाश्लिष्टवपुष्मतोश्च शिवयोरन्तर्मुदः सन्ततम्।।

—कलानन्दके रामचन्द्रशेखरस्य

1101. कुम्भौ मे कथमम्ब मूर्ध्नि गिरिजे कस्मादिमौ वक्षसि
स्तस्ते तात इमौ स्पृशत्यनुदिनं नो मामकीनौ कुतः।
इत्येवं शिशुवक्रतुण्डवदनप्रोद्यद्गिरा सस्मितौ
देयास्तां गिरिजाशिवौ सकरुणौ श्रेयांसि भूयांसि नः।।

—साहित्यकल्पद्रुमे सोमशेखरस्य

1102. कुम्भौ मे मूर्ध्नि कस्मादयि जननि कथं वक्षसि स्तस्तवेमौ
तातः किं तावकीनौ स्पृशति न तु कथं मामकीनौ वद त्वम्।
इत्येवं बाललम्बोदरमधुरगिरा स्मेरवक्त्रारविन्दौ
कल्याणं वः क्रियास्तां निरवधिकरुणावारिधी पार्वतीशौ।।

—अलङ्कारमकरन्दे कोल्लूरिराजशेखरस्य

1103. क्रीडोद्याननिकुञ्जसीमनि सखीचातुर्यतो मिश्रयो-
रुत्कूलप्रणयोदिते सरभसा श्लेषे मिथः प्रस्तुते।
सम्मोहस्तिमिता समग्रपुलका विस्त्रस्तवेद्यान्तरा-
वृत्तिः सा शिवयोरपारपरमानन्दा शिवायास्तु वः।।

—विद्यापरिणयने आनन्दरायमखिनः

1104. क्वचित्पदनमन्महि क्वचन मन्दपादक्रमम्
क्वचित्स्फुटजटाभ्रमि क्वचन कम्पमानालकम्।
क्वचित्सफणिफूत्कृति क्वचन कङ्कणक्वाणवत्
करोतु शिवयोश्शुभं नटनकर्म तत्तादृशम्।।

—लक्ष्मीमानवेदे दिवाकरस्य

1105. चञ्चद्वेणिजटं नतोन्नतलसद्भ्रूवल्लिदिव्यां
शुकद्वीपित्वक् परिशालिपीतसितभं हेमाहिभूषान्वितम्।।

किं ब्रह्मेति विवादमत्रविदुषां हर्त्तुं यदेकी भवत्
तल्लोकत्रयमङ्गलं विजयते द्वन्द्वं किमप्यद्भुतम्।।

—रामविलासकाव्ये विश्वनाथकवेः

1106. जगद्वैचित्र्यजननजागरुकपदद्वयम्।
अवियोगरसाभिज्ञमाद्यं मिथुनमाश्रये।।

—अलङ्कारसङ्ग्रहे अमृतानन्दयोगिनः

1107. जयति मिथुनमाद्यं जातरूपारुणाभं
रविशशिशिखिनेत्रं राजरेखावतंसम्।
चरणकमलचञ्चच्चञ्चरीकामरेशं
शरणमुपगतानां शाश्वतानन्ददायि।।

—पेन्टपडु—दानपत्राभिलेखे चोडभक्तिरायस्य

1108. नमश्शिवाभ्यामशिवापहाभ्यामशेषकल्याणविशेषताभ्याम्।
असम्भवाभ्यां श्रुतिसम्भवाभ्यां नमो नमः शङ्करपार्वतीभ्याम्।।

—शिवगीतायाम्

1109. नमामि निलयक्रोडनिलयं नीललोहितम्।
अम्बागिरीन्द्रनिलयामम्बिकामपि सादरम्।।

—आशौचन्तिामणेष्टीकायाम्

1110. परस्परतपः संपत्फलायितपरस्परौ।
प्रपञ्चमातापितरौ पाञ्चौ जायापती स्तुभः।।

—कुवलायानन्दे अप्पयदीक्षितस्य

1111. पाणिभ्यामुपजातवेपथुतया यत्नेनयः कल्पितो
येनस्वेदजलौघपूरिततया नापेक्षितोम्बुग्रहः।
सन्ध्यार्थत्वमवेत्य यो मुकुलिते सव्ये करे कम्बुना
सादृश्यं गतवान् स पातु शिवयोः सायन्तनोर्घाञ्जलिः।।

—दण्डविवेके वर्धमानस्य

1112. प्रेंखन्नखच्छविमिथश्च्छरितेन यस्मिन्
रक्ताञ्चलग्रथतकौतुकमन्वकारि।
स्वेदोद्गमद्विगुणदानजलः स भूयान्
भूयात् करग्रहविधिः शिवयोः शिवाय।।

—मुहूर्त्तमालायां सरसदैवज्ञसूनोर्रघुनाथस्य

1113. बीजावापमुपेयिवान् स्मृतिवशाद् रागोष्मणोद्भेदवा-
नन्योन्यस्य कराङ्गुलीघटनया प्राप्तप्रवालोद्गमः।
विस्त्रम्भेण विकासवान् सफलतामैक्येन सम्भावयन्
कल्याणं भवतां करोतु शिवयोरानन्दकल्पद्रुमः।।

—कुवलयावल्यां शिङ्गभूपालस्य

1114. वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।

—रघुवंशे कालिदासस्य

1115. शृङ्गारवीरसौहार्दं मौग्ध्यवैयात्यसौहृदम्।
लास्यताण्डवसौजन्यं दाम्पत्यं तद् भजामहे।।

—कुवलयावल्यां शिङ्गभूपालस्य

1116. श्रीभवानीशिवौ वन्दे सच्चिदानन्दविग्रहौ।
विधीन्द्रादिभिराराध्यौ भक्तकल्पमहीरुहौ।।

—रुद्रजपहोमप्रयोगे अनन्तदेवस्य

1117. समस्तजगतामीशौ जगदानन्दकारकौ।
जगतीजनकौ वन्दे पार्वतीपरमेश्वरौ।।

—सिद्धान्तकौमुद्याः व्याख्यायां तत्त्वबोधिन्याख्यायां
ज्ञानेन्द्रसरस्वत्याः

1118. स्वर्गापवर्गविस्फारौ भुवनस्योदये यथा।
भवरोगहरौ वन्दे चन्द्रिकाचन्द्रशेखरौ।।

—रसरत्नाकरे नित्यनाथस्य

## परिणये शिवः

1119. आनीता निकटं सखीभिरधिकप्रेम्णा कटाक्षाङ्कुरैः
पश्यन्तीं गुरुलज्जया नतमुखीं स्पर्शेन रोमाञ्चितम्।
मीनाक्षीं वरपाण्ड्यराजतनयां हारं क्षिपन्तीं गले
दृष्ट्वा हृष्टमनाः शिवः परिणये श्रेयांसि पुष्णातु वः।।

—श्रृङ्गारविलासभाणे शाम्भशिवस्य

1120. गेहद्वारमुमाविमुञ्चतु वदन्नेवं विवाहोत्सवे
पातु त्वामनिशं स्मितेन हरिणा लज्जायितो धूर्जटिः।
भूयाः पर्वतनन्दिनि त्रिजगतां मातेति वाचं जनै-
र्दत्तामाशिषमीश्वरः किमु सतामङ्गीकरोति स्वयम्।।

—हलायुधविजये

1121. गौरीपाणिग्रहणसमये मूर्ध्नि शम्भोर्विधात्रा
विन्यस्तस्ते दिशतु कुशलं राशिरार्द्राक्षतानाम्।
मुक्तास्फोटप्रसृमरमणिस्तोमसाम्येन येन
प्रालेयांशुः परिणत इव प्रेयसीभिर्विभाति।।

—दर्सी—अभिलेखे

1122. गौरीरूपविभूषणाम्बरधरां कृत्वा परां कन्यकाम्
प्रस्तावोचितहासकेलिचतुरैरालीजनैर्वञ्चितः।
तत्कालं कुलपालिकाविहसितं श्रुत्वा विवाहोत्सवे
विश्वेषामभिवाञ्छितं वितनुतात् सव्रीडहासो हरः।।

—धूर्त्तविडम्बने अमरेश्वरस्य

1123. पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति।
अङ्कुरित इव मनोभूर्यस्मिन् भस्मावशेषोऽपि।।

—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

1124. ब्रह्मेन्द्रोपेन्द्रचन्द्रद्युमणिकुलगिरिक्ष्मासमुद्रादिरूपै-
र्लोकं संक्रान्तबिम्बं नखमुकुरतले यत्पादाब्जाङ्गुलीनाम्।
दृष्या शैलेन्द्रपुत्री परिणयसमये विस्मयं प्राप लज्जा-
नम्रीभूताननेन्दुः स हरतु दुरितं पार्वतीवल्लभो वः।।

—रतनपुरप्रस्तराभिलेखे

1125. शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्
रोमाञ्चादि विसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः।।

—सुभा० सुधा० भा०

1126. स्नातः स्वर्गतरङ्गिणीजलभरैर्नेत्रोत्पलेनाञ्चितः
पार्वत्याः सितभूतिचन्दनचयैरालिप्तगात्रोज्वलः।
देवश्चन्द्रकलासितभ्रुतिलको गौरीविवाहोत्सवारम्भे
शैलकृतार्हणस्त्रिजगतामर्च्चो हरः पातु वः।।

—सुभा०सुधा० भा०

## शिवविलासः

1127. अग्रे कृत्वा प्रियसहचरीमन्तिकं सम्प्रयान्तीं
व्रीडाभारादवनतमुखीमम्बिकामादरेण।
लोलापाङ्गं प्रणयमधुरं लोचनान्तेन पश्यन्
नन्तस्तुष्यन्नवतु भगवानम्बिकावल्लभो नः।।

—विद्याधरकृतायां एकावल्याष्टीकायां तरलाख्यायां
मल्लिनाथस्य

1128. अरुणनयनं सभ्रूभङ्गं रुषा स्फुरिताधरं
सुतनु शशिनः क्लिष्टां कान्तिं करोतु तवाननम्।
कृतमनुनयैः कोपोऽयं ते मनस्विनिवर्धता-
मिति गदितया श्लिष्टो देव्या शिवाय शिवोऽस्तु वः।।

—चण्डकौशिके आर्यक्षेमेश्वरस्य

1129. आत्मीयञ्चरणं दधाति पुरतो निम्नोन्नतायाम्भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया।
तल्पे किञ्च मृगत्वचाविरचते निद्रातिभागैर्निजै-
रन्तःप्रेमरसालसां प्रियतमामङ्के दधानो हरः।।

—रसमञ्जर्यां भानुदत्तस्य

1130. उच्चैरपर्णामुखचन्द्रबिम्बं परामृशन्तं निजपाणिपल्लवैः।
गङ्गाधरं नौमि भुजङ्गराहुप्रकृष्टभीत्या चकितं मुहुर्मुहः।।

—आचारार्के दिवाकरस्य

1131. कल्याणं भवतां तनोतु शिवयोः शय्याथ सा कौसुमी
लज्जावीतमनोभुवा गिरिजया रोमाञ्चसञ्छन्नया।
दूराक्षिप्तदुकूलयांशु शमितेऽप्युद्दीप्तदीपे विभो-
श्चूडाचन्द्रहताशया विशरणं यालिङ्गिता केवलम्।।

—श्रृङ्गारमञ्जरीभाणे रतिकरस्य

1132. कुम्भी त्वां परिणन्तुमिच्छति कुचौ दृष्ट्वा प्रतीभभ्रमात्
कस्तूर्या मकरीः करोम्ययि तयोः शोभाक्षरालम्बिनीः।
भीतिस्ते न भवेत्तदा मकरतो भीतो गजः प्रागभूत्
इत्थं शैलसुतास्तनौ कपटतः शम्भुः स्पृशन् पातु नः।।

—अलङ्कारमकरन्दे कोल्लूरिराजशेखरस्य

1133. कुसुमशरविलासे भङ्गुरस्याद्रिपुत्री-
करतलवलयस्य क्ष्मागतस्यार्द्धमेकम्।

निजमिव शशिखण्डं मन्यमानस्य शम्भो-
र्भवतु सह विवादः कान्तया कौतुकाय।।

—विवादरत्नाकरे चन्देश्वरठाकुरस्य

1134. गौरीनवपरिष्वङ्गे विभोः स्वेदाम्बु पातु वः।
नेत्राग्निभीत्या कामेन वारुणास्त्रमिवाहितम्।।

—कथासरित्सागरे द्वितीये लम्बके सोमदेवभट्टस्य

1135. गौरीपयोधरस्पर्शद्विगुणीभूतवेपथुः।
हरो गौरीमुखामोदसतृष्णः पातु नः सदा।।

—ज्योतिष्सुबोधे पक्षधरमिश्रस्य

1136. गौरीं सस्पृहमीक्षते रतिपतिं रुद्रं समुत्कण्ठते
तद्योषामनुकम्पते पुरपरिक्षोभोऽति रौद्रायते।
विभ्राडस्थिभिरञ्चितः फणंफणैरुत्कम्पते हासकृ-
न्नग्नस्वीक्षणविस्मृतोत्तरभृतध्यायी हरः पातु वः।।

—चतुरचूडामणौ दासिराजस्य

1137. चञ्चच्चूडान्तचुम्बत्सुरसरिदुदयत्कूटकौटिल्यभावो-
द्रेकामेकान्तरोषाद् विलुलितवदनां मानिनीमम्बिकां ताम्।
देवि! प्रेम्णा प्रसीदेत्यनुनयनविधौ तत्परश्चाटुकारो
द्रागारोप्याङ्कपालीमनुमुदितशिवो यश्शिवस्सोऽवतान्नः।।

—सर्वदर्शनविमर्शे शिवजीउपाध्यायस्य

1138. च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
समं चक्रीकृत्य प्रहसितमुखी शैलतनया।
अवोचद्यं पश्येत्यवतु स शिवः सा च गिरजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः।।

—सुभाषितपद्धतौ श्रीपतेः

1139. जटागुल्मोत्सङ्गं प्रविशति शशी भस्मगहनं
फणीन्द्रोऽपि स्कन्धादवतरति लीलाञ्चितफणः।
वृषः शाठ्यं कृत्वा विलिखति खुराग्रेण नयनं
यदा शम्भुश्चुम्बत्यचलदुहितुर्वक्त्रकमलम्।।

—वत्सराजस्य

1140. जयति रतिविलासे सङ्गमः शङ्करस्य
स्मरनिगडनिबद्धः काञ्चनः शैलपुत्र्याः।
गरलकवलकालीभूतभूतेशकण्ठ-
स्थलजलधरविद्युद्विभ्रमा बाहुबल्ली।।

—प्रशस्तपादभाष्यटीकासङ्ग्रहे शङ्करमिश्रस्य

1141. तस्या नाम मया कथं कथमपि भ्रान्त्या समुच्चारितं
जानास्येव ममाशयं तव कृते गौरि प्रसन्ना भव।
क्षान्तिः स्वीक्रियतां दयावति मयि क्रोधः परित्यज्यता-
मित्येयं बहुजल्पतः स्मररिपोः प्रेमाञ्जलिः पातु वः।।

—सदुक्ति० चक्रपाणेः

1142. दूरे दारुवनाभिसारकमृषा चाटूनि मुञ्चाधुना
भूयस्त्वं पुनरप्यहं यदि तदा चन्द्रः क्षितिं यास्यति।
इत्युक्तः शशिमौलिरद्रिसुतया चूडेन्दुभूलम्भन-
व्याजव्यञ्जितपादपद्मपतनप्रीतप्रियः पातु वः।।

—सदुक्ति० कविपण्डितश्रीहर्षस्य

1143. देव्याः प्राक् परिरम्भणे किल करौ द्वौ द्वौ पुनस्तत्करौ
रोद्धुं तन्मुखमुन्मुखं रचयितुं द्वौ चाधरास्वादने।
द्वौ नेत्रान्तचलालकापनयने मोक्तुं च नीवीं दृढां
द्वावेवं सफलीकृताखिलकरः पायात्स वः शङ्करः।।

—गीतगौर्यां तिरुमलस्य

1144. पायाद्वो दयिताकेलिकोपे शम्भो प्रणामिनः।
चन्द्र लेखानिषक्तेव तत्प्रसादस्मितच्छटा।।

—वृहत्कथमञ्जर्यां पञ्चमे लम्बके क्षेमेन्द्रस्य

1145. पायाद्वो भूतनाथो निशि शिखरिसुतासङ्गलीलाविलासै-
र्जाते काले निशीथे स्मृतसुरतटिनीकेलिरुच्चैः प्रिये हे!
उक्त्वा गङ्गालहर्या तव चिरविरहव्याकुलोऽहं सकोपां
वक्रभ्रूशोणनेत्रामथ निजमहिर्षी वञ्चयन् यो विटेशः।।

—कामकन्दले कृष्णपण्डितस्य

1146. पायाद्वः सुरदीर्घिकाजलरयभ्राम्यज्जटामण्डली-
वेगव्याकुलनागनायकफणाफूत्कारवातोच्छलत्।
सप्ताम्भोनिधिजन्मचण्डलहरीमज्जन्नभोमण्डल-
ग्रासत्रस्तसुराङ्गनाकलकलक्रीडाविलक्षो हरः।।

—सदुक्ति० ब्रह्महरेः

1147. पौलस्त्यपीनभुजसम्पदुदस्यमान
कैलाससम्भ्रमविलोलदृशः प्रियायाः।
श्रेयांसि वो दिशतु निह्नुतकोपचिह्न-
मालिङ्गनोत्पुलकमासितमिन्दुमौलेः।।

—सुभा० सुधा० भा०

1148. प्रणयकलहकाले निर्घृणं भीतिहेतोः
प्रकटयति समन्तान्मायया कायमस्मिन्।
समयमथ भवान्या गाढलिङ्गायमानो
घटयतु घनविघ्नध्वंसमस्माकमीशः।।

—तत्त्वचिन्तामणिप्रकाशे रुचिदत्तस्य

1149. प्रातः सहस्रकिरणप्रणिपातभीरुः
कक्षातटप्रणयिनीं मदनप्रशस्तिम्।

आस्तां जगत्त्रयमुदे तिरयन्भुजाभ्यां
गौरीनखक्षतिपदावलिमिन्दुमौलिः।।

—लटकमेलके शङ्खधरस्य

1150. प्रोन्मीलल्लोलमौलिश्लथविकटजटाजालमालोक्य मुह्यन्
गङ्गासम्पातजातभ्रमभरविवशो विक्षिपँल्लोचनानि।
आकर्षन्मौक्तिकालीं गिरिवरदुहितुः कण्ठसीमात उच्चैः
प्रातः श्रीहैमवत्या तदनु विहसितो लज्जितः पातु शम्भुः।।

—अन्योक्तिशतके भट्टवीरेश्वरस्य

1151. बालः सुन्दरि चन्द्रमाः स्रुतसुधाधाराभिराप्यायितो
निद्रामेति फणीश्वरः सुरधुनी रुद्धा जटावल्लिभिः।
इत्थं मन्मथकेलिकौतुकविधौ व्रीडावतीं पार्वतीं
पायाद्वः प्रतिबोधयन्नववधूं चन्द्रार्द्धचूडामपि।।

—सदुक्ति० कक्वोलस्य

1152. भूयिष्ठाः परिरम्भकेलिषु भुजाः सोत्कण्ठमालोकने
नेत्राणि प्रचुराणि चुम्बनविधौ भूयांसि वक्त्राणि ते।
इत्थं भूरिवधूविलासघटनासज्जस्य काऽहं तव
प्रोक्तः क्रोधविरुद्धयेति शिवया स्मेरो हरः पातु वः।।

—हास्यचूडामणौ वत्सराजस्य

1153. मानाद्व्यावृत्तनिद्रारसमुपगतया स्वप्नसन्दृष्टमात-
ङ्गाक्रान्तौ जातभीत्या श्रमजलयुतया चापि सन्तापवत्या।
आवीतस्वप्नया द्रागतिकरुणमये पाहि पाहीति चोक्त्वा
गाढाश्लिष्टो भवान्या बहलपुलकितः पातु वो वामदेवः।।

—शृङ्गारमञ्जरीभाणे रतिकरस्य

1154. मौलिं स्वेदजलार्द्रकुन्तलमुरः पूर्वाधिकोष्णस्तनं
श्रोणीमुच्छ्वसदंशुकां पुलकिते पार्श्वे प्रकम्पौ करौ।

सस्तम्भं चरणद्वयं च मुदितो गौर्याश्शिवः कौतुका-
त्तत्तन्नृत्तकलोचिताङ्गकथनव्याजैः स्पृशन् पातु वः।।
—नृत्यरत्नावल्यां जायसेनापतेः

1155. यश्चामीकरकुम्भसन्निभकुचद्वन्दस्य रत्युत्सव-
क्रीडानेहसि शैलराजदुहितुर्वक्त्रारविन्दस्य च।
निष्पर्याय दिदृक्षयेव भगवान्धत्ते स्म नेत्रत्रयं
स श्रेयांसि समातनोतु भवतामर्द्धेन्दुचूडामणिः।।
—रतनपुर—प्रस्तराभिलेखे कालचुरेः

1156. यस्यालिङ्गनरम्यरूपगिरिजासम्भोगसम्भावित-
स्वेदाम्भः कणचुम्बितोभयतटप्रोद्भासिभालम्बकम्।
प्रान्तप्रोतविशुद्धमौक्तिकलसन्माणिक्यमध्यस्रजः
शोभामातनुते तनोतु स शिवः श्रेयांसि भूयांसि वः।।
—अभिलेखे

1157. रक्षाक्षावलिमाः परित्यज जटाः कोऽयं मदप्रक्रमः
कौपीनं त्यज मुञ्च मुञ्च नखरव्यापारमास्थानिकम्।
इत्युद्भ्रान्त इवोल्लपन्नवतु वो मन्दं निकुञ्जोदरे
रुद्राणीसुरतप्रबन्धविकलः खण्डेन्दुचूडामणिः।।
—लटकमेलके शङ्खधरस्य

1158. लीलाद्यूतिजितां कलाधरकलां मौलौ दृढं कीलिता-
माहर्तुं युगमुन्नमय्य भुजयोर्विश्लेषयत्यामिथः।
पार्वत्याः कुचकुम्भपार्श्वयुगले सप्रेमलोलेक्षणः
कालक्षेपणमिन्दुमोचनविधौ कांक्षन् शिवः पातु वः।।
—रेड्डिराजानाम् अभिलेखे

1159. वक्त्राणि पञ्चकुचयोः प्रतिबिम्बितानि
दृष्ट्वा दशाननसमागमनभ्रमेण।

भूयोऽपि शैलपरिवृत्तिभयेन गाढ-
मालिङ्गितो गिरिजया गिरीशः पुनातु।।

—गङ्गेशोपाध्यायकृत—तत्त्वचिन्तामणेष्टीकायां
आलोकाख्यायां पक्षधरस्य

1160. श्रीमत्पर्वतपुत्रिकाकुचतटीपाटीरपङ्कैः श्रितं
यद्दोर्मध्यमधःप्रसर्पितशरच्चन्द्रांशुलेशैरिव।
भाति श्लिष्टललाटकुङ्कुममिव स्वप्रेयसीचुम्बने
फाले यस्य विलोललोचनरुचिः पायात्स नः शङ्करः।।

—चन्द्ररेखाविलासे

1161. श्रुतिः सक्ता मुग्धे वचसि वदनेन्दौ निपतिता
दृशः स्वादौ बिम्बाधरमधुनि मग्नैव रसना।
निषण्णाभून्नासा निजपरिमले शैलदुहितु-
र्घनाश्लेषानन्दे वपुरपि विलीनं पुरभिदः।।

—सदुक्ति० उमापतिधरस्य

1162. सन्ध्यायाः प्रणति क्षणे गिरिजया सेर्ष्यं समालोकिते
रोषं मानिनि मा कृथास्त्वदपरा नान्यास्ति वन्द्या मम।
किं तु त्वामहमानमामि मनसि ध्यात्वा तवैवाकृती-
रित्थं हर्षितशैलराजतनया दृष्टः शिवः पातु नः।।

—न्यायसिद्धान्तमञ्जरीदीपिकायां श्रीकण्ठस्य

1163. सलज्जैर्निर्वस्त्रं भयशिथिलितैर्नागविभवम्
भवं दृष्ट्वा चन्द्राङ्कितकलजटं किञ्च चकितैः।
कटाक्षैरुन्मीलन्मधुपजलजातद्युतिहरै-
र्भवान्याः सन्तुष्टो वितरतु सुखं काममथनः।।

—सामवते अम्बिकादत्तव्यासस्य

1164. स्फीतावतंसशशिसङ्कुचदङ्गसङ्गि-
रोमाञ्चसञ्चयमिषेण समुन्मिषन्तम्।
गौरीकरग्रहमिलन्नववारिधारा-
-सिक्तं स्मरामि गिरिशप्रणयप्ररोहम्।।

—प्रबन्धपारिजाते रामचन्द्रमिश्रस्य

1165. स्मेराः काक्षशतैर्निवार्य निभृतं चातुर्यधुर्याः सखीः
सारिं सारयतो मृषा गणयतः स्थानान्यतिक्रामतः।
कण्ठाश्लेषपणे दुरोदरविधौ चन्द्रार्द्धचूडामणे-
र्देवीं वञ्चयतो जयन्ति गहनच्छद्मक्रमाः केलयः।।

—कर्पूरचरितभाणे वत्सराजस्य

1166. स्वर्भानुः सुरवर्त्मनानुसरति ग्रासाभिलाषादसा-
विन्दोरिन्दुमुखि! ग्रसेत किमुत भ्रान्त्या भवत्या मुखम्।
इत्थं नाथगिरा नभोऽर्पितदृशो वक्त्रे भवान्या भृशं
मानिन्याः कृतचुम्बनस्त्रिनयनः स्तादिष्टसिद्ध्यै सताम्।।

—सुभा० सुधा० भा०

1167. स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमा-
दूर्ध्वश्वासपरिस्खलत् स्मरकथं सन्दष्टदन्तच्छदम्।
शीत्काराञ्चितलोचनं सपुलकं भ्रान्तभ्रुनृत्यत्करम्
पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः।।

—हास्यार्णवप्रहसने जगदीश्वरतर्कालङ्कारभट्टाचार्यस्य

1168. हर्षादम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या
श्वश्र्वा मौलौ पुरारेर्दुहितृपरिणये साक्षतं चुम्ब्यमाने।
तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो
दृष्ट्वा तद्वृत्तमाशुस्मितसुभगमुखः पातु वः पञ्चवक्त्रः।।

—सुभा० सुधा० भा०

# शिवशिवालापः

1169. अन्यस्मै संप्रतीमं कुरु मदनरिपो स्वाङ्गदानप्रसादं
नाहं सोढुं समर्था शिरसि सुरनदीं नापि सन्ध्यां प्रणन्तुम्।
इत्युक्त्वा कोपविद्धां विघटयितुमुमामात्मदेहं प्रवृत्तां
रुन्धानः पातु शम्भोः कुचकलशहठस्पर्शकृष्टोभुजो वः।।

—सदुक्ति० मयूरस्य

1170. एषा ते हर का सुगात्रि कतमा मूर्ध्नि स्थिता किं जटा
हंसः किं भजते जटां न हि शशी चन्द्रो जलं सेवते।
मुग्धे भूतिरियं कुतोऽत्र सलिलं भूतिस्तरङ्गायते
इत्थं यो विनिगूहते त्रिपथगां पायात् स वः शङ्करः।।

—सदुक्ति०

1171. कस्त्वं द्वारि दिगम्बरः क्षपणकः कस्मादकस्मादहो
बाले शूलधरो धिगायुधविधिं वर्हास्त्वदर्हा ननु।
मां जानीहि महेश्वरं स्फुटमिदं वस्त्रेप्यभावादिति
प्रेयस्या परिहासतो विहसितं शम्भोः शुभायास्तु वः।।

—प्रस्तराभिलेखे धङ्गदेवस्य

1172. कस्त्वं शूली मृगय भिषजं नीलकण्ठः प्रियेऽहं
केकामेकां कुरु पशुपतिर्नैव दृश्ये विषाणे।
स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवाया
गच्छाटव्यामिति हतवचाः पान्तु वश्चन्द्रचूडः।।

—शा० प० भारतीकवेः

1173. कस्मात् पार्वति निष्ठुरासि सहजं शैलोद्भवानामिदं
निःस्नेहासि कुतो न भस्मपरुषः स्नेहं क्वचिन्निन्दति।

कोपस्ते मयि निष्फलः प्रियतमे स्थाणौ फलं किं भवे-
दित्थं निर्वचनीकृतो दयितया शम्भुः शिवायास्तु वः।।
—सदुक्ति० भोजदेवस्य

1174. किं गौरि मां प्रति रुषा ननु गौः किमस्मि
कुप्यामि कं प्रति मयीत्यनुमानतोऽहम्।
जानामि सत्यमनुमानत एव स त्व-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति।।
—सदुक्ति० रुद्रटस्य

1175. केयं मूर्ध्न्यन्धकारे तिमिरमिह कुतः सुभ्रुकान्तेन्दुयुक्ते
कान्ताप्यत्रैव कामिन्ननु जलमुमया पृष्टमेतावदेव।
नाहं द्वन्द्वं करोमि व्यपनय शिरसस्तूर्णमेनामिदानी-
मेवं प्रोक्ते भवान्या प्रतिवचनजडः पातु वो मन्मथारिः।।
—सदुक्ति०

1176. क्व तिष्ठतस्ते पितरौ ममेवेत्यर्पणयोक्ते परिहासपूर्वम्।
क्व वा ममेव श्वसुरौ तवेति तामीरयन्सस्मितमीश्वरोऽव्यात्।।
—सुभा० सुधा० भा०

1177. खट्वाङ्गं परशुर्वृषः शशिकलेत्यादि त्वदीयं मया
सर्वस्वं जितमद्य-नामकितव-प्रत्यर्पितं ते पुनः।
प्रेष्या केवलमस्तु मे जलवहा गङ्गेति गौरीगिरा
शम्भोर्द्यूतकलाजितस्य जयति व्रीडाविनम्रं शिरः।।
—गौहाटी—पट्टाभिलेखे इन्द्रपालस्य

1178. गाढं ध्वान्तमनेकभानुजठरे राजत्कलाधारिणि
प्रोदञ्चच्छफरी युगं दरदलत्पद्मेषु हीरावलिः।
स्वर्णोत्तुङ्गगिरिद्वयाधरचरी दीनाकलिन्दात्मजा
पश्याश्चर्यमिदं शिवामिति वदन् स्मेरः शिवः पातु वः।।
—कुण्डमण्डपसिद्धौ विट्ठलदीक्षितस्य

1179. त्वं हालाहलभृत्करोषि मनसो मूर्छां ममालिङ्गितो
हालां नैव बिभर्मि नैव च हलं मुग्धे कथं हालिकः।
सत्यं हालिकतैव ते समुचिता सक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरो हरः पातु वः।।

—वक्रोक्तिपञ्चाशिकायां रत्नाकरस्य

1180. दास्येऽहं परिरम्भणानि कितव! द्यूते जितानि त्वया
मिथ्यौत्सुक्यमिदं यतः शतमहोरात्रास्तदीयाऽवधिः।
इत्युक्तः शिवया निशादिवसकृज्ज्योतिर्मयाक्षिद्वय-
द्रागुन्मेषनिमेषकोटिघटनव्यग्रो हरः पातु वः।।

—कर्पूरचरितभाणे वत्सराजस्य

1181. दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको
दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं च चाङ्गे तव।
तस्माद्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यता-
मित्थं शैलभुवा विहस्य लपितः शंभुः शिवायास्तु व;।।

—सुभा० सुधा० भा०

1182. द्यूतक्रीडां करिष्ये नहि नहि भवता साकमम्भोजनेत्र
गृꣳासि त्वं मदीयाः किल निजविजये हारकेयूरकाञ्चीः।
शूलं व्यालं कपालं उमरुमथ ददासीश मे मज्जये त्व-
मित्थं देव्या वचोभिः प्रहसितवदनः पातु नश्चन्द्रचूडः।।

—सामवते अम्बिकादत्तव्यासस्य

1183. घन्या केयं स्थिता ते शिरसि शशिकला किन्नु नामैतदस्या
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निꣲोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः।।

—मुद्राराक्षसे विशाखदत्तस्य

1184. न क्रोधः क्रियतां प्रिये स तु भवन्मौलिस्थगङ्गोदरे
मुग्धे मानसपूजितं त्यज कृतं युष्मन्नियोगद्वयम्।
वक्रे श्लेषममुं निराकुरु कदाश्लिष्टोऽसि वक्रो मया
वामाङ्ग्येति हृतोत्तरः स्मरहरः स्मेराननः पातु वः।।

—सुभा० सुधा०भा०

1185. प्राप्तं तस्य फलं मयाद्य तपसो यत्तत्कृतं तत्पुरः
यन्मे मूर्ध्नि पदं करोति हर हे त्वल्लालिता जाह्नवी।
गेहं यामि पितुर्गृहाण तनयं सोढुं न शक्तास्म्यहम्
एवं मन्युभरालसं गिरिजया प्रोक्तो हरः पातु वः।।

—इन्द्रगढप्रस्तरामिलेखे

1186. मुग्धे! सुन्दरि! यामि शैलशिखरं किं तत्र माहेश्वरि
ध्यानार्थं ननु नास्ति काचिदपरा तातस्य गेहे पुनः।।
इत्थं पवर्तनन्दिनीकुतुककृद्वाणीः सुधाह्लादिनीः
शृण्वन् नष्टसमाधिधीः पशुपतिः पायादपायाज्जगत्।।

—अभिज्ञानशाकुन्तलस्य टीकायां किशोरकेलिइत्याख्यायां
नवकिशोरकरशास्त्रिणः

1187. मौलौ चन्द्रार्द्धमौले प्रवसति रुचिरा प्रेयसी काप्यपूर्वा
नान्यां जानामि कान्ते कुवलयनयना प्रेयसी त्वं ममासि।
आदर्शं पश्य तथ्यं वद कितव मुहुस्तर्जितो देवदेव्या
त्रस्तः पादानतोयं स्मितरुचिरमुखः पातु वो विश्वनाथः।।

—गौरीविवाहनाटके जयभूपतीन्द्रमल्लदेवस्य

1188. श्रीविश्वनाथ! विषमं चरितं त्वदीयं दृष्ट्वा
परां न वृणुया इति शङ्कितास्मि।
इत्थं निशम्य वचनं गिरिशो भवान्या
अङ्गीभवन्प्रमुदितो भवतान्मुदे नः।।

—विश्वनाथपञ्चाननभट्टाचार्यकृत—कारिकावल्याष्टीकायां
सिद्धान्तमुक्तावल्याख्यायां सूर्यनारायणशुक्लस्य

1189. सन्ध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च नदीं विलज्ज शिरसा तन्नाम सोढं मया।
श्रीर्यातामृतमन्थने यदि हरिं कस्माद्विषं भक्षितं
मा स्त्रीलम्पट मां स्पृशेति गदितो गौर्या हरः पातु वः।।

—सुभा०

1190. सव्यालम्बनमेतदद्य भवतो निःस्नेह मुञ्चाम्यहम्
सव्यालं विजहीहि सुन्दरि वनं निःस्नेहता नास्ति मे।
मैवं वक्ष्यसि किं वनं ननु जलं मूर्ध्ना मयैवोह्यते
वक्रोक्त्येति हिमाद्रिजामवचसं कुर्वन्हरः पातु वः।।

—वक्त्रोक्तिपञ्चाशिकायां रत्नाकरस्य

1191. स्वामिन् वासो ममैतन्नहि नहि विदितं शीतरश्मेः स वक्रः
स्वर्गङ्गा वेद सास्त्रीभुजगपरिवृढः शोभने स द्विजिह्वः।
स्वीयाङ्गस्पर्शपूर्वन्तदिह भगवतैर्वोच्यतामित्यकस्मा-
दर्थिप्रत्यर्थिभावः शिव शिव शिवयोः श्रेयसे नः सदास्तु।।

—द्वैतपरिशिष्टे केशवस्य

## शिवहासः

1192. कङ्कणफणिराजमणिन्दीपधिया वदनमारुतैरसकृत्।
निर्वापयति कुमारे सगिरिसुतो जयति सस्मितः शम्भुः।।

—कालिदासकृत्— नलोदयस्य टीकायां
सुबोधिन्याख्यायां प्रज्ञाकरमिश्रस्य

1193. कर्णोत्तंसितशेषशेषफणभृत् पुच्छच्छटापीडनोन्-
मीलच्चन्द्रकलामृतोर्मिकणिकास्वादेन मेदस्विना।
मन्दस्पन्दविभिन्नबन्धमुरगाकल्पेनभीतिस्पृश
स्पृष्टायाः सदृशो विलोक्य वदनं हृष्यन् हरः पातुः नः।।

—पदार्थचन्द्रिकायां शेषानन्तस्य

1194. कौमारकेकिकुलकूजितमिन्द्रनील-
कैलासशैलशिखरे क्षणजं निशम्य।
सञ्जातकान्तपृषदं वदनं भवान्या
दृष्ट्वा स्मिताञ्चितमुखोऽवतु विश्वमीशः।।

—रतिमकरन्दटिप्पणे पुरुषोत्तमभट्टस्य

1195. क्रौञ्चारिद्विरदास्ययोः शिशुतया तातस्य मौलौ मिथो
गङ्गावारिणि खेलतोः शशिकलामालोक्य मध्येजटम्।
शैवालावलिमध्यबद्धशफरीबुद्ध्या समाकर्षतो-
राक्रन्दस्फुटकन्दलेन विहसन्नव्याज्जगद्धूर्जटिः।।

—बर्रकपुरदानपत्राभिलेखे विजयसेनस्य

1196. तातं तत्ताततातं कथय हर कुलेऽलङ्कृते सम्प्रदाने
तच्छ्रुत्वा चन्द्रमौलिर्नतवदनकजो जातलज्जो बभूव।
ब्रह्मावादीत्तदानीं शृणुत हरकुलं वेदकण्ठोग्रकण्ठ
श्रीकण्ठान्नीलकण्ठः प्रहसितवदनः पातु वश्चन्द्रचूडः।।

—सुभा०सुधा०भा०

1197. निर्विघ्नं घनसारसारविशदस्वर्लोककल्लोलिनी-
कल्लोलप्रतिमल्लबाहुचलनैर्व्याप्तान्तरालश्रियः।
शम्भोः सम्भवदङ्गहारतरलोत्तंसामृतांशुद्रव-
प्राणत्प्राणिकपालचापलदृशो हासोर्मयः पान्तु वः।।

—सदुक्ति० वाचस्पतेः

1198. पाणिग्रहे पर्वतराजपुत्र्याः पादाम्बुजं पाणिसरोरुहाभ्याम्।
अश्मानमारोपयतः स्मरारेर्मन्दस्मितं मङ्गलमातनोतु।।

—सुभा० सुधा० भा०

1199. पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकम्
कण्ठः कुण्ठितकालकूटजटिलो वस्त्रं गजेन्द्राजिनम्।

गौरीचोलनलोभनाय सुभगो वेषो वरस्येति मे
गण्डोल्लासविभावितः पशुपतेर्हास्योद्गमः पातुः वः।

—सदुक्ति० रुद्रटस्य

1200. प्रतिबिम्बं निजं दृष्ट्वा कुचे मातुरिभाननम्।
स्तन्ये मन्दादरं वीक्ष्य स्मेरं स्मरहरं श्रये।।

—भिक्षाटनकाव्ये उत्प्रेक्षावल्लभस्य

1201. भृङ्गी कस्तव चर्चिके गुह न कोऽप्याकार एकस्तु नौ
सत्यं भृङ्गरिटे सुसत्यमनृतं लोकं तु मोटिर्वदेत्।
नग्नं पृच्छतमस्तु वां परिणयैकात्मत्वमित्युद्भट-
स्तावुत्सृज्य सपर्षदः पशुपतेर्हास्योद्गमः पातु वः।।

—सदुक्ति० शतानन्दस्य

1202. मातर्ब्रूहि किमेतदञ्जलिपुटे तातेन गोपायितं
वत्स स्वादुफलं प्रयच्छति न मे गत्वा गृहाण स्वयम्।
मात्रैवं प्रहिते गुहे विघटयत्याकृष्य सन्ध्याञ्जलिं
शम्भोर्भग्नसमाधिरुद्धमनसो हास्योद्गमः पातु वः।।

—सदुक्ति० योगेश्वरस्य

1203. मूर्ध्नि स्थितां हिमकरस्य कलां ग्रहीतुं
इच्छावतीं सरभसं स्पृशतीं भ्रमेण।
दृष्ट्वा हिमालयसुतां प्रहसन् महेशः
श्वश्श्रेयसं स वितनोतु निरन्तरं नः।।

—साहित्यकण्टकोद्धारे

1204. वक्षोजद्वयकाञ्चनाचलपरीरम्भस्खलन्मुक्तिका-
लाजव्राजबुभुक्षुपन्नगफणाफूत्कारभीतां पुनः।
वासोत्कामतिवेयमानजघनां पर्याकुलां कौतुकी
निर्यान्तीमचलात्मजामुपहसन् पञ्चाननः पातुः वः।।

—अभिज्ञानशाकुन्तलस्य टीकायां रसचन्द्रिकाख्यायां शङ्करस्य

1205. वक्षोंशुकाहरणसाध्वसकृष्टमौलि-
माल्यच्छटाहतरतालयदीपभासः।
देव्यास्त्रपामुकुलितं मुखमिन्दुभाभि-
वीक्षाननानि हसितानि जयन्ति शम्भोः।।

—देवोपराभिलेखे विजयसेनस्य

1206. सहस्रास्यो नागः प्रभुरपि मतः पञ्चवदनः
षडास्यो हन्तैकस्तनय इतरोवारणमुखः।
सदा भैक्ष्यं शश्वत्प्रभवतु कथं वर्तनमिति
श्वसन्त्यां पार्वत्यामथ जयति शम्भुस्मितमुखः।।

—सुभा०सुधा०भा०

## शिवनृत्तम्

1207. अस्थीन्यस्थीन्यजिनमजिनं भस्म भस्मेन्दुरिन्दु-
र्गङ्गा गङ्गोरग उरग इत्याकुलाः सम्भ्रमेण।
भूषदानोपकरणगणप्रापणव्यापृतानां
नृत्यारम्भप्रणयिनि शिवे पान्तु वाचो गणानाम्।।

—सदुक्ति० धनपालस्य

1208. आर्द्रां कण्ठे मुखाब्जस्रजमवनमयत्यम्बिका जानुलम्बां
स्थाने कृत्वेन्दुलेखां निविडयति जटापन्नगेन्द्रेण नन्दी।
कालः कृत्तिं निबध्नात्युपनयति करे कालरात्रिः कपालं
शम्भोर्नृत्तावतारे परिषदिति पृथग्व्यापृता वः पुनातु।।

—सदुक्ति० शतानन्दस्य

1209. आसीनैः स्वं विमानं कृतपरिवृतिभिः सुन्दरीसङ्गतैस्तै-
र्देवैःसिद्धैश्च यक्षैरनिमिषनयनैर्दृश्यमानः सतृष्णम्।
मध्ये मध्ये पयोदैर्मुरजसदृशतां बोधयद्भिः सुमन्द-
मम्भः सम्पात्य पुष्पैरिव ननु महितस्ताण्डवः श्रेयसे स्तात्।।

—सुभा० सुधा० भा०

1210. उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपात-
स्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनी सङ्गमानि।
जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसंघट्टभूरि
भ्राम्यन्नक्षत्रचक्रव्यवसितसुमनोवृष्टिपातानि शम्भोः।।

–शा० प० भेरीभांकारस्य

1211. उत्क्षिप्तो दण्डपादो ग्रहगणमुडुभिः सार्द्धमुत्तम्य भूयः
प्रायाद्यावत्स्वसीमामपरपदभरभ्रष्टपृष्ठा क्व भूमिः।
इत्थं दौस्थेपि रङ्गे गगनतलचलच्चारिकाचारवृत्ते-
स्त्रायन्तां वस्त्रिसन्ध्यं त्रिपुरविजयिनस्ताण्डवक्रीडितानि।।

–रानोड–अभिलेखे

1212. उत्तानाः कति वेल्लिताः कति रयादाभुग्नमध्याः कति
क्षिप्तोत्क्षिप्त विकुञ्चिताः कति भुजास्तौर्यत्रिकानुक्रमात्।
कल्पान्तेषु महानटस्य झटिति प्रक्रान्तचक्रभ्रमि-
भ्रान्तौ केवलमग्निहासगरलैर्लेखात्रयं पातु वः।।

–सदुक्ति० सागरधरस्य

1213. उद्दामदन्तरुचिपल्लविताऱ्र्द्धचन्द्र-
ज्योत्स्नानिपीततिमिरप्रकरावरोधः।
श्रेयांसि वो दिशतु ताण्डवितस्य शम्भो-
रम्भोधरावलिघनध्वनिरट्टहासः।।

–सदुक्ति० सङ्घमित्रस्य

1214. उद्वेलनातिभरनिर्भरहस्तषण्ड-
चण्डाभिघातरभसोत्पतदद्रिजालैः।
यः कन्दुकैरिव कृतातुलतालकेलि-
र्न्नृत्ते वभौ स भवभिद्भवताद्भवो वः।।

–सेनकपट–अभिलेखे

1215. एकं पादमुदस्य कुञ्चिपदं विन्यस्य भूमौ स्थितं
व्यत्यासेन भुजं प्रसार्य डमरुं व्यावर्तयन् पाणिना।
अम्बावक्त्रसरोरुहेक्षणवशात् सानन्दनम्रस्मितम्
हैमे संसदि ताण्डवं प्रकटयन् सद्यो नटः पातु नः।।

—शिवाष्टके

1216. क्वचित् कनककुण्डलस्तबकमण्डिगण्डस्थलं
क्वचित् कुटिलकुण्डलिप्रकटमण्डनाडम्बरम्।
क्वचित् कनकसन्निभं क्वचन् शारदाभ्रप्रभं
महो महदुपास्महे विहितताण्डवं शाम्भवम्।।

—पारिजातहरणचम्प्वां श्रीकृष्णस्य

1217. क्षुभ्यत्सप्तार्णवानि स्खलदमरधुनी झातिकृन्निर्झराणि
भ्रस्यत्क्षोणिधराणि प्रचरकचतलोत्क्षिप्ततारोत्करणि।
मज्जद्ब्रूमण्डलानि त्रसदसुरसुरोन्मुक्तहाहारवाणि
त्रायन्ताम्बः समन्तात्त्रिपुरहरमहाताण्डवाडम्बराणि।।

—ताम्रपत्राभिलेखे इन्द्रदेवस्य

1218. क्षोणि क्षोभं क्षमस्व त्वमपि कुरु महाकूर्म कर्म स्वकीयं
भोः भोः कैलासमेरुप्रभृतिकुलधराधारिणो गच्छताधः।
ब्रह्मन्नुद्गच्छ दूरं कुरुत जलधयः स्थैर्यमित्यष्टमूर्ते-
भर्तुर्नृत्यावतारे सरभसगदिताः पान्तु वो नन्दिवाचः।।

—सदुक्ति० द्वैपायनस्य

1219. चरणभरावनतावनिविनमत्कमठोरु कर्पराभोगा।
नाट्यस्य धूर्जटेर्धूरिवर्णपरिष्वष्कणी जयति।।

—रानोड—अभिलेखे

1220. चलच्चरणताडितक्षितितलं सुपर्वापगो-
च्छलज्जलभृतात्बरं भ्रमितभीमनेत्रत्रयम्।
जटापटलभेदितो परिचराम्बुदं धूर्जटे-
स्तनोतु पटुताण्डवं मम नवं नवं मङ्गलम्।।

—मन्त्रचन्द्रिकायां गोस्वामीजनार्दनस्य

1221. चारी-सञ्चरणप्रवीणचरणव्यापारणाघूर्णित-
क्षोणीकुण्डनमत्फणीश्वरफणं विद्राणदिग्वारणम्।
दोर्दण्डभ्रमणादकाण्डचलितब्रह्माण्डखण्डं मुदे
भूयाद्वो निविडक्वणड्डमरुकं चण्डीपतेस्ताण्डवम्।।

—चन्द्रेहे—अभिलेखे प्रबोधशिवस्य

1222. झलं झलितकंकणं तकतकाङ्घ्रिसन्ताडितं
क्वणत् क्वणितनूपुरं हरहरेति शब्दोज्वलम्।
धिमिन्धिमितदुन्दुभिध्वनिघनाकुलं मद्दलै-
र्धणं धणधणध्वनज्जयति ताण्डवं शाम्भवम्।।

—बालरामभरते बालरामवर्मणः

1223. तूर्णं घूर्णति यत्र गोत्रशिखरिव्यूहः समूहः पत-
त्यत्यावर्त्तितमूर्त्तिरात्तविरुतं कुर्वन्ककुप् कुम्भिनाम्।
सप्ताम्भोध्यवधिप्रधूतवसुधाबन्धः कबन्धीकृत-
स्वर्गाद्रिः क्षयकाण्डताण्डवविधः शैवः शिवायास्तु वः।।

—प्रस्तराभिलेखे ढङ्गदेवस्य

1224. त्रिपुरदनुजं हत्वा नृत्यन्महेश्वरनायके
प्रवरमुनिभिर्देवैर्हृष्यन्मनोभिरभीक्षिते।
नयनसुभगानाट्ये याभून्महोत्सवकारिणी
भवतु सततं सेयं सिद्धिर्मयापि च तद्वति।।

—भैरवानन्दनाटके मणिकवेः

1225. त्वङ्गद्दङ्गमुदञ्चदिन्दुशकलं वेल्लत्कपालाकुलम्
पायाद्वः श्वसदङ्गदोरुभुजगं चण्डीपतेस्ताण्डवम्।
यस्योद्भ्रान्तभुजप्रबन्धबलनावातोत्सलत्सागर-
स्फाराम्भः पटलैः पुरं पटमिवासक्तं समातन्वत।।

—वृहत्कथामञ्जर्यां पञ्चमे लम्बके क्षेमेन्द्रस्य

1226. दिदीदिन्दीन्दीदीधकिकटनदन्नन्दिमुरजम्
रणद्राणद्राणद्रणरणरणद्घर्घररवम्।
स्फुरत्फूफूफूफूफणिपतिफणाफूत्कृतिशतम्
शिवं भूयोभूयः प्रथमनटनाट्यन्दिशतु वः।।

—गौरीदिगम्बरप्रहसने शङ्करमिश्रस्य

1227. देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येवलोका-
नस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव।
वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः
शम्भोर्नृत्तावतारे वलयफणिफणाफूत्कृतैर्विप्रकीर्णः।।

—चण्डकौशिकनाटके क्षेमेश्वरस्य

1228. देवा दिक्पतयः प्रयात परतः खं मुञ्चताम्भोमुचः
पातालं व्रज मेदिनिः प्रविशत क्षोणीतलं भूधराः।
ब्रह्मन्नुन्नय दूरमात्मभवनं नाथस्य नो नृत्यतः
शम्भोः संकटमेतदित्यवतु वः प्रोत्सारणा नन्दिनः।।

—सुभा० सुधा० भा०

1229. दोर्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरव-
ध्वानोद्गीतजगद्भ्रमत्पदभरालोलत्फणाग्र्योरगम्।
भृङ्गापिङ्गजटाटवीपरिसरद्गङ्गोर्मिमालाचलत्
चन्द्रं चारु महेश्वरस्य भवतां निःश्रेयसे ताण्डवम्।।

—सुभा० सुधा० भा०

1230. द्रष्टेव प्रतिबिम्बकैर्न्नखगतैः स्वैर्न्नृत्यसम्पद्विधेः
सोवश्वीव गतिं शुभां प्रकटयन् दृश्योनिशन्ताण्डवीम्।
एवं यः परमात्मवत् पृथुगुणो ह्येकोप्यनेकी भवन्
प्राकाम्यन्दधदेव भाति भुवने स स्तात् श्रिये शङ्करः।।

—बर्गांव—दानपत्राभिलेखे रत्नपालस्य

1231. नन्दिन् खञ्जनमञ्जुनादमुरजं संगृह्य सज्जीभव
कूष्माण्डानय भस्मभाजनमितो लम्बोदरागम्यताम्।
स्कन्दं नन्दय मन्दिरोदरगतं देवीति रङ्गाङ्गणे
शम्भोस्ताण्डवमण्डनैकमनसः संजल्पितं पातु वः।।

—सदुक्ति० योगेश्वरस्य

1232. नृत्यारम्भरसत्रदद्रिरिसुतारिक्तार्द्धसम्पूर्तये
निर्व्यूढभ्रमिविभ्रमायजगतामीशाय तुभ्यं नमः।
यच्चूडाभुजगेश्वरप्रभृतिभिस्तादृग्भ्रमन्तीर्दिशः
पश्यद्भिर्घनघूर्णमानवदनैः शान्तोपि न श्रद्दधे।।

—सुभा० सुधा० भा०

1233. नेत्रक्रोडप्रसक्तोज्वलदहनशिखापिङ्गभासां जटानां
भारं संयम्य कृत्वा सममभृतकरोद्भासि मौलीन्दुबिम्बम्।
हस्ताभ्यामूर्ध्वमुद्यद्विषशिखिवदनग्रन्थिमातत्यनागं
स्थाणुःप्रारब्धनृत्तो जगदवतु लयोत्कम्पिपादाङ्गुलीकः।।

—कनस्व—अभिलेखे शिवगणस्य

1234. पदप्रचुरकिङ्किणीकिणिकिणिध्वनिभ्राजितम्
हरिप्रमुखदेवताधृतलसन्मृदङ्गादिकम्।
धिधिं धिमितथैतथैतधरवानुसारिक्रमम्
सदा तिमितिमङ्गलं दिशतु शाम्भवं ताण्डवम्।।

—ताण्डवस्तोत्रे

1235. पादन्यासनमत्क्षितिप्रविलसद्दोः काण्डचण्डभ्रमि-
भ्रान्तप्रान्तनगाभिघातविदधदिक्पालपर्याकुलम्।
खट्वाङ्गोत्कटकोटिघृष्टिविचटद्ब्रह्माण्डमुड्डामरं
पायात्ताण्डवडम्बरं पुरभिदो देवस्य वः सर्वदा।।

—कोनि—अभिलेखे कलचुरिपृथ्वीदेवस्य

1236. पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम्।
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम्।।

—मुद्राराक्षसे विशाखदत्तस्य

1237. पायादायासखेदक्षुभितफणिफणारत्ननिर्यत्नानिर्यच्
छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम्।
अभ्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीकनाल-
च्छेदामोदानुधावद्रुधिरमिव खगे धूर्जटेस्ताण्डवं नः।।

—सुभा०सुधा०भा०

1238. पृथ्वीपृथ्वीनपदभ्यां न च वहति नभस्तुङ्गतामुत्तमाङ्गात्
पाणिप्रक्षेपयोग्यं दधति दशदिशः किञ्च नैवावकाशम्।
कुर्यां किं वा न कुर्य्यां त्रिपुरविजयिनस्ताण्डवे चिन्तयेत्थम्
व्यग्रःसर्गादिहेतुस्त्रिदशगणनुतः श्रेयसे भैरवोऽस्तु।।

—जयदेवकृतचन्द्रालोकस्य प्रकाशाख्यायां टीकायां बलभद्रसूनोः
प्रद्योतनभट्टाचार्यस्य

1239. भद्रं चन्द्रकले शिवं सुरनदि श्रेयः कपालावले
कल्याणं भुजगेन्द्रवल्लिकुशलं विश्वे शटासन्तते।
इत्याहुर्मिलिताः परस्परममूर्यस्मिन् प्रशान्तिं गते
कल्पान्तारभटीनटस्य भवतात्तद्वः श्रिये ताण्डवम्।।

—राजशेखरस्य

1240. भ्राम्यच्चण्डजटाविसृत्वरगलद्गङ्गाजलप्लाविते
रङ्गे भालगचन्द्रकोटिविलसद्रश्मिप्रदीपोच्चये।
काले सान्ध्यकरानुरञ्जितककुप्प्रान्तस्थ धाराधरे
भूयाद्भूतिविभूतिदण्डमरुमच्चण्डीपतेस्ताण्डवम्।।

—भाट्टार्के नीलकण्ठस्य

1241. भ्राम्यद्विश्वम्भराणि भ्रमिचलननमत्कूर्मकुम्भीनसानि
त्रुट्यत्ताराणि रिङ्गद्धरणिधरशिरः श्रेणिशीर्यद्दृषन्ति।
दिक्कीर्णोदञ्चदम्पि द्रवदमरचमूचक्रचञ्चद्वियन्ति
व्यस्यन्तु व्यापदं वस्त्रिपुरविजयिनस्ताण्डवारम्भणानि।।

—सदुक्ति० राजशेखरस्य

1242. मायाभोगामयौघाकुलितजगदलङ्कारभावैकरक्षा-
दीक्षायां यायजूकं क्षितितलचलनोदग्रपादाग्रघातम्।
प्रोत्सर्पद्भूरिसर्पद्भ्रमणरयजयत्ताण्डवोद्दण्डवेगम्
शम्भोरम्भोजशोभाहरचरणयुगं सौभगं नस्तनोतु।।

—शिवलीलामृतमहाकाव्ये नित्यानन्दस्य

1243. मूर्द्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्भूताम्भक्षोददम्भात्प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम्।
ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेश
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः।।

—सुभा०सुधा०भा०

1244. यस्यां मौलिमिलत्सुधांशुकलया सम्पूर्णबिम्बायितं
भालावस्थितलोचनेन सहसैवालातचक्रायितम्।
आवर्तायितमाकपर्दममरस्रोतस्वतीधारया
पातु त्रीणि जगन्ति खण्डपरशोः सा ताण्डवाङ्गभ्रमिः।।

—सुभा०सुधा०भा०

1245. लीलाभ्रान्तिविसर्पदम्बरतया व्यग्रार्द्धकान्तं पद-
न्यासन्यञ्चदुदञ्चदद्रिवसुधाभोगीन्द्रकूर्माधिपम्।
फूत्कारस्फुरदुत्पतत्फणिकुलं रिङ्गज्जटाताडन-
ध्यातव्योमगभीरदुन्दुभिनटन्नव्यात्स वो धूर्जटिः।।
—वीरमित्रोदये शुद्धिप्रकाशे मित्रमिश्रस्य

1246. वक्त्राम्भोरुहपञ्चकं विकचयन्नेत्रत्रयं दर्शयँ-
ल्लालाटं दहनं स्फुटं प्रकटयंस्तोयं कचैर्मोचयन्।
बालं चन्द्रमुदञ्चयन् विरचयन् द्राक् ताण्डवाडम्बरा-
नाश्चर्याणि निदर्शयञ्जगदथं पायान्नटो धूर्जटिः।।
—पद्यरचानायां आङ्कोलकरलक्ष्मणभट्टस्य

1247. वेल्लद्दोर्द्दण्डवेगानिलविहतमहाक्ष्माधरोत्तुङ्गश्रृङ्ग-
ग्रावभ्रंशोपजातध्वनिचकितचलद्दिग्गजोन्मुक्तनादम्।
पादन्यासान्निमज्जद्धरणितलभराभुग्नभोगीन्द्रभोग-
न्नृत्तं वः पातु शम्भोर्मुकुटशशिकलालिङ्गितव्योमचन्द्रम्।।
—भतुरीय—अभिलेखे राज्यपालस्य

1248. शम्भोश्शुम्भतिजृम्भयद्गणमुदं सन्ध्यान्धकारं मस-
त्सर्वास्सुष्ठुसुपर्वपर्वतरुचीन्कुर्वाणमुर्वीधरान्।
भूषाभूतभुजङ्गपुङ्गवघनप्रोल्लासफुल्लत्फणा-
रत्नोद्यद्युतिपञ्जराञ्चितनभोदिङ्मण्डलं ताण्डवम्।।
—अभिलेखे रिचेर्लपरिवारस्य

1249. शम्भोस्ताण्डवडम्बरोत्सवभृतः प्रेङ्खद्भुजामण्डली-
वातोत्क्षिप्तसमस्तसागरपयः पूरः स पायात्जगत्।
यस्मिन्व्योमतलं प्रसर्पति पुनः कल्पान्तकालभ्रम-
त्रस्तामुग्धवधूससंभ्रमपरीरम्भान्ननन्दुः सुराः।।
—शोभनेश्वर—मन्दिराभिलेखे वैद्यनाथस्य

1250. शर्वाणीपाणितालैश्चलवलयक्षणत्कारिभिः श्लाघ्यमानं
स्थाने संभाव्यमानं पुलकितवपुषा शंभुना प्रेक्षकेण।
खेलत्पिच्छालि केकाकलकलकलितं क्रौञ्चभिद्बर्हियूना
हेरम्बाकाण्डबृंहातरलितमनसस्ताण्डवं त्वां धिनोतु।।

—सुभा० सुधा० भा०

1251. शुद्धान्ते सीधुपानोन्मदमदनमदोन्मादमत्तालिकाली
तालीसंताड्यमानोद्भटमुरजरवाडम्बरोल्लासिताङ्गः।
नृत्यन्मग्नो विलज्जश्चलविकटतटैः स्रस्तयैर्लोचनार्द्धै-
र्दृष्टः स्त्रीभिः सहासं प्रहसनमुदितः पातु वो वामदेवः।।

—सुभा०सुधा० भा०

1252. सन्ध्याताण्डवसम्विधानविलसन्नान्दीनिनादोर्मिभि
र्निर्मर्यादरसार्णवो दिशतु वः श्रेयोऽर्द्धनारीश्वरः।
यस्यार्द्धं ललिताङ्गहारवलनैरर्द्धे च भीमोद्भटै-
र्नाट्यारम्भरयैर्जयत्यभिनयैर्देवानुरोधश्रमः।।

—नैहति—दानपत्राभिलेखे वल्लालसेनस्य

1253. सन्ध्याताण्डवितस्य खण्डपरशोरव्याज्जगन्ति ज्वल-
ल्लालाटाक्षिपुटोद्भवानलशिखालीढेन्दुलेखं शिरः।
भ्रश्यत्कृत्ति चलन्महाहिविगलद्व्योमापगाम्बुस्खल-
त्खण्डेन्दूच्छलदच्छभूतिचटुलभ्राम्यज्जटासन्ततिः।।

—सदुक्ति० योगेश्वरस्य

1254. सम्पूर्णाङ्गमशेषकल्मषमुषः सम्पन्नमप्यादरा-
द्दूरं पादतलावघट्टननमत्कैलासनश्यत्स्थिति।
सानन्दं युगपत्सुरासुरसभा संरम्भदत्तव्यथं
शम्भोर्लास्यपरिग्रहस्य दिशतु श्रेयांसि वः स्थानकम्।।

—रानोड—प्रस्तराभिलेखे

1255. सायं प्रस्तुतचण्डताण्डवचलद्गङ्गातरङ्गावली-
रिङ्गत्पद्मरजोऽतिवेलकपिलश्रीभृज्जटामण्डलः।
नृत्ताटोपविलोककौतुकजुषां वैमानिकानां मनः-
पाथोजातविकासवासरमणिः पायादुमायाः पतिः।।

—विक्रमसेनचम्प्वां नारायणरायसचिवस्य

1256. सूचीपातेन सद्यः प्रचलति वसुधा कम्पते नागराजः
पादोद्धारेण नीतो ध्वज इव धवलो दुःखमिन्दुर्विभाति।
दोर्दण्डैश्च भ्रमद्भिः पुनरपि गिरयो जातपक्षाः प्रयान्ति
यस्मिन्नित्थं प्रनृत्ते भवति जगदिदं सोऽस्तु भूत्यै भवो वः।।

—इन्द्रगढ़—प्रस्तराभिलेखे

1257. स्फूर्ज्जद्धूर्जटिताण्डवे प्रतिदिशं वेगोच्छलज्जाह्नवी-
वीचीध्वाननिपीतभृङ्गिमुरजस्फारस्वनाडम्बरे।
लालाटामृतरश्मिखण्डमसकृद्व्योमस्थितेऽर्द्धे विधो-
राघातादघसञ्चयं दलयतु प्रोत्तालतालायितम्।।

—वीरमित्रोदये तीर्थप्रकाशे मित्रमिश्रस्य

1258. हेलापादप्रपातान्नमदवनिभराक्रान्तकूर्मेशशेष-
प्रोद्धूतश्वासवातोच्छलदुदधिपयोधौतसूर्येन्दुतारम्।
भ्राम्यद्दोः संघवेगापतदचलकुलध्वानसंत्रस्तविश्वम्
त्रैलोक्यैश्वर्यकारि द्यतु तव दुरितं ताण्डवं चन्द्रमौलेः।।

—सदुक्ति० वाच्छोकस्य

1259. हेलोल्लासितचण्डदण्डचरणाङ्गुष्ठाग्रभागाहत-
स्वर्गङ्गोद्गतशुक्तिसम्पुटगलन्मुक्ताभृतं ताण्डवे।
पाणौ वीक्ष्यकपालमाश्वथ जटाचन्द्रामृतोज्जीवितं
कङ्कालं च ययद्भुतं स्मितमवत्वीशस्य तद् वश्चिरम्।।

—खरपतन—पत्राभिलेखे रट्टराजस्य

# शिवशिरः

1260. अन्तःस्वीकृतजाह्नवीजलमतिस्वच्छन्दरत्नाङ्कुर-
श्रेणीशोणभुजङ्गनायकफणाचक्रोल्लसत्पल्लवम्।
भूयादभ्युदयाय मोक्षनगरप्रस्थानभाजामितः
प्रत्यूहप्रशमैकपूर्णकलशप्रायं शिरो धूर्जटेः।।

—सदुक्ति० जलचन्द्रस्य

1261. केलिकेशग्रहव्यग्रगौरीकरनखावृतम्।
शिवायानेकचन्द्राढ्यमिव शार्वं शिरोऽस्तु वः।।

—कथासरित्सागरे सप्तमे लम्बके सोमदेवभट्टस्य

1262. गौरीचुम्बनचञ्चलाञ्चलवलच्चन्द्रप्रभामण्डलम्
व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम्।
प्रौढ़प्रेमपरम्परापरिचयप्रोत्फुल्लनेत्राञ्चलम्
शम्भोरस्तु विभूतये त्रिजगतामुन्मत्तगङ्गं शिरः।।

—लटकमेलके कविराजशेखरस्य

1263. धूमोद्भेदानभिज्ञस्फुरदनलमनाघ्रातपङ्काधिकार-
प्रेङ्खत्कल्लोलवारिव्यतिकरमनघस्पर्शजाग्रत्कपालम्।
अज्ञातास्तत्रियामादयितमविदितप्राणिहिंसोरगस्र-
ग्भूतेशस्य प्रभूताद्भुतमवतु शिरः श्रेयसां सन्ततिं वः।।

—वैद्यगदाधरस्य

1264. नाट्यावेगविनिःसृतत्रिपथगावारिप्रवाहाकुलः
शीघ्रभ्रान्तिवशाल्ललाटनयनज्वालातडिद्भीषणः।
मुण्डालीकुहरप्रसर्पदनिलास्फालप्रयुक्तध्वनिः
प्रावृट्काल इवोदितः शिवशिरोमेघः शिवायास्तु वः।।

—सदुक्ति०

1265. परिकरितमिन्दुमौलेर्जयति शिरः स्वर्गवाहिनीसलिलैः।
यस्मिन्नुप्तं सद्यः कुसुमं कल्पद्रुमी भवति।।

—त्रिपुरदाहडिमे वत्सराजस्य

## शिवजटा

1266. इन्दोर्ध्दौतमृणालतन्तुभिरिव श्लिष्टाः करैः कोमलै-
र्वद्धाहेररुणैः स्फुरत्फणिमणैर्द्दिग्धप्रभासोंशुभिः।
पार्वत्याः सकचग्रहव्यतिकरव्यावृत्तवन्धश्लथा-
गङ्गाम्भः प्लुतिभिन्नभस्मकणिकाः शम्भोर्जटा पान्तु वः।।

—दानपत्राभिलेखे यशोभित्मध्यमराजस्य

1267. उत्पत्रेव दृशोर्चिषा कुसुमितेवेन्दोः करैर्भोगिभिः
सारोहेव जटाटवी फलतु वः श्रेयो भवानीपतेः।
यत्पर्यन्तविवर्त्तिनः सुरसरित्पूरस्य भूरिस्फुर-
त्फेनेण्डूकविलासमञ्चति विधेर्जीर्णा कपालावली।।

—सदुक्ति० उमापतिधरस्य

1268. क्वचिदमरसरित्क्वचित्कपालं
क्वचिदुरगाः क्वचिदैन्दवी च लेखा।
इति विषमविभूषणैरुपेता
प्रमथपतेरवताज्जटाटवी वः।।

—सदुक्ति० दण्डिनः

1269. गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखा
रत्नैः कोरकिता सुधांशुकलया स्मेरैकपुष्यश्रियः।
आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहदा-
नाल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः।।

—कविकल्पलतायां वाग्भट्टसूनोर्देवेश्वरस्य

1270. चूडापीडकपालसङ्कुलगलन्मन्दाकिनीवारयो
विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः।
पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्स्रङ्नद्धजूटा जटाः।।

—मालतीमाधवे भवभूतेः

1271. चूडापीडनिबद्धवासुकिफणाफुत्कारनिर्यद्विष-
ज्वालाजृम्भितमत्स्यकच्छपवधूलीढेन्दुलेखामृतम्।
अव्याद्वः स्मरसूदनस्य मदनक्रीडाकचाकर्षण-
श्च्योतन्नाकसरित्सरोषगिरिजादृष्टं जटामण्डलम्।।

—सदुक्ति० भवभूतेः

1272. जयति जटाकिञ्जल्कं गङ्गामधुमुण्डवलयबीजमयम्।
गलगरलपङ्कसम्भवमम्भोरुहमाननं शम्भोः।।

—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

1273. जयति व्योमकेशोऽसौ यस्सर्गाय बिभर्त्तिताम्
ऐन्दवीं शिरसा लेखां जगद्बीजाङ्कुराकृतिम्।
तन्वन्तु वः स्मरारातेः कल्याणमनिशं जटाः
कल्पान्तसमयोद्दामतडिद्वलयपिङ्गलाः।।

—मान्धातापत्राभिलेखे जयसिंहस्य

1274. जयति हरजटाभरो यदन्तर्वहति निराकुलमेव देवसिन्धुः।
लहरिषु तरलेन्दुराजहंसा विततविरिञ्चिकपालफेनमाला।।

—सूक्तिमु०

1275. जयति हुताशनविद्युद्विद्रुमसंघातनिभजटाभारः।
यच्छिरसि मणिजटाभारक्तसरित्पद्ममालेव।।

—गुडिमल्लम्—पत्राभिलेखे

1276. जाह्नवीधूर्जटिजटाकुन्दमाला पुनातु वः।
राजहंसश्रियं धत्ते यद्वारि वलये शशी।।

—बृहत्कथामञ्जर्यां द्वादशे लम्बके क्षेमेन्द्रस्य

1277. ज्वालेवोर्ध्व-विसर्पिणी परिणतस्यान्तस्तपस्तेजसो
गङ्गातोय- तरङ्ग- सर्प- वसतिर्वल्मीकलक्ष्मीरिव।
सन्ध्येवार्द्र- मृणालकोमलतनोरिन्दोः सह-स्थापिनी
पायाद्वस्तरुणांशुमालिकपिला शम्भोर्जटासन्ततिः।।

—कुन्दमालायां विङ्नागस्य

1278. त्वङ्गद्रङ्गमुदञ्चदिन्दुशकलं भ्रश्यत्कपालावलि-
क्रोडभ्राम्यदमन्दमारुतचयस्फारीभवद्भांकृति।
पायाद्वो घनताण्डवव्यतिकरप्राग्भारखेदस्खल-
द्भोगीन्द्रश्लथपिङ्गलोत्कटजटाजूटं शिरो धूर्जटेः।।

—सदुक्ति० वीर्यमित्रस्य

1279. देयासुर्मूर्ध्निराजत्सरससुरसरित्प्रान्तपर्यन्तनिर्यत्
प्रांशुस्तम्बाः पिशङ्गास्तुलितपरिणतारक्तशालीलतापः।
दुर्वारावर्तगर्तश्रितनिखिलजनोद्धारणे रज्जुभूता
घोराघोर्वीरुहालीदहनशिखिशिखाः शर्म शार्वाः कपर्दाः।।

—शिवकेशादिपादान्तवर्णने शङ्कराचार्यस्य

1280. धून्वन्तु नः स्फुरितशोणमरीचिमाला
दुःखानि धूर्जटिकिरीटजटाकलापाः।
अन्तर्ज्वलन्निटिल-लोचन-हव्यवाह
ज्वालावली विलसितभ्रममादधानाः।।

—विद्धशालभञ्जिकायां राजशेखरस्य

1281. पायाद्वः स समस्तमङ्गलनिधिः शम्भोर्जटाजूटको
यस्मिन्लोलसमद्युमण्डलगलन्मन्दाकिनीवारिभिः।

गाढ़ग्रन्थिनिपीडितोरगप्रतिप्रस्फारपुंल्लत्फणा-
भीमव्यावृतवक्त्रमारुतधृतैः श्वेतातपत्रायितम्।।
—बिल्हरि—प्रस्तराभिलेखे

1282. पुण्यं व्योमसरिज्जलेन वहता चन्द्रांशुभिः शीतलं
सत्पुष्पं कनकारविन्दनिचयो निर्वाणसम्पत्फलम्।
व्यालालीविषकन्दलीमृगप्रतिप्रान्तं न सन्तापदं
श्रीधन्धेश्वरमूर्ध्नि सर्वसुखदं वस्ताज्जटाकाननम्।।
—धरणीवराह—दानपत्राभिलेखे वधवास्य

1283. बभ्रुर्बिभर्त्यलिकपावकसौहृदं यो
यत्राहिरेति शिखिना सह सामरस्यम्।
जूटः स वः सममरातिभिरप्यमर्ष-
मुक्तां स्थितिं प्रथयतु प्रमथाधिपस्य।।
—स्तुतिकु०

1284. भोगीन्द्रस्य फणामणिद्युतिमिलन्मौलीन्दुलोलांशवो
नेत्राग्नेश्छुरितास्सधूमकपिशैर्ज्वालाशिखाग्रैः क्वचित्।
मुक्ताकारमरुन्नदीजलकणैराकीर्णशोभाः क्वचि-
च्चेत्थं शाश्वतभूषणव्यतिकरैः शम्भोर्जटाः पान्तु वः।।
—कनस्व—अभिलेखे शिवगणस्य

1285. मूलावनद्धभुजगेन्द्रकृतालवाल-
बन्धाः स्खलत्त्रिदशसिन्धुजलौघसिक्ताः।
उन्मुक्तचन्द्रकुसुमा जगतां हिताय
शम्भोर्जटाः कनककल्पलताः फलन्तु।।
—सदुक्ति० दङ्कस्य

1286. शम्भोर्यानि शिरस्थितस्य फणिनां पत्युः फणानां दिशो
द्योतन्ते परितः शतानि समणिज्योर्तींषि जूटाटवीम्।

एनस्तान्युपरिस्रवत्सुरसरित्सिक्तेन्दुकन्दोल्लस-
ज्ज्योत्स्नाकल्पलतालवालवलयश्रीभांजि भञ्जन्तु वः।।

—अन्दुर—पत्राभिलेखे गोविन्दस्य

1287. शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्या-
स्तद्ग्रासोल्लासवल्गद्धरशफरतुलां यत्र धत्ते कलावान्।
उन्मीलद्भोगिभोगावलिसुभगसिताम्भोजसंभाविताम्भा
गङ्गानङ्गारिसङ्गा मम महित विधौ मङ्गलान्यातनोतु।।

—प्रक्रियाकौमुद्याः व्याख्यायां प्रकाशाख्यायां कृष्णदत्तस्य

1288. श्वेतद्वीपानुकाराक्वचिदपरिमितैरिन्दुपादैः पतद्भि-
र्नित्यस्थैस्सान्धकाराः क्वचिदपि निभृतैः फाणिपैर्भोगभागैः।
सोष्माणो नेत्रभाभिः क्वचिदतिशिशिराजह्नुकन्याजलौघै-
रित्थं भावैर्विरुद्धैरपि जनितमुदः पान्तु शम्भोर्जटा वः।।

—कनस्व—अभिलेखे शिवगणस्य

1289. स धूर्जटिजटाजूटो जायतां विजयाय वः।
यत्रैकपालितभ्रान्तिं करोत्यद्यापि जाह्नवी।।

—शा०प० सूरवर्मणः

1290. स्वभावपिङ्गाः शशिरश्मिशुभ्रा
भुजङ्गरत्नाङ्कुरनीलभासः।
रक्षन्तु वो मन्मथसूदनस्य
जटाः सिताब्जरश्व सुरायुधाभाः।।

—नरवर —अभिलेखे

# शिवलोचनं

1291. अन्तर्धृताहिमकरज्वलनोदितेन्दुः
स्वःसिन्धुसङ्गसुभगा परमेश्वरस्य।
औदन्वतीव तनुरस्तु गजाश्वरत्न-
श्रीलाभकृत्सुमनसाममृताय दृग्वः।।

—स्तुतिकु०

1292. अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं
स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम्।
प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्र-
व्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्द्धमौलेः।।

—सुभा०सुधा०भा०

1293. अर्कस्य नोदगयनं शिशिरेऽपि यत्र
शीतत्विषो न बहुलेऽपि कलापलापः।
क्षामं च धाम न वहत्यपि वह्निरह्नि
तत्त्रायतां पुररिपोर्नयनत्रयं वः।।

—स्तुतिकु०

1294. आनन्दस्तिमिताः समाधिषु मुखे गौर्या विलासालसाः
संभ्रान्ताः क्षणमद्भुताः क्षणमथ स्मेरा निजे वैकृते।
क्रूराः कृष्ठशरासने मनसिजे दग्धे घृणाकूणिता-
स्तत्कान्तारुदितेश्रुपूरतरलाः शम्भोर्दृशः पान्तु वः।।

—चण्डकौशिके आर्यक्षेमेश्वरस्य

1295. एकं योगनियोजनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या जघनस्थले स्तनतटे श्रृङ्गारभावालसम्।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितम्
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः।।

—सदुक्ति० श्रीहर्षदेवस्य

1296. गौरीप्रसाधनालग्नचरणालक्तकश्रियः।
सखी सुखाय भूयाद्वः शम्भोर्भालेक्षणप्रभा।।
—कथासरित्सागरे त्रयोदशे लम्बके सोमदेवस्य

1297. गौरीमुखेऽतिसरसा मनोजे तीव्रदारुणा।
विबुधेषु सदा स्निग्धा सा दृष्टिर्मे प्रसीदतु।।
—वीरपृथ्वीराजनाटके मथुराप्रसाददीक्षितस्य

1298. जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ।
धनुषि स्मरेण निहितस्सकण्टकः केतकेषुरिव।।
—आर्यासप्तशत्यां गोवर्द्धनाचार्यस्य

1299. जयतु कुसुमवाणप्राणविक्षोभदक्षम्
स्वकिरणपरिवेषैर्जित्यजीर्णेन्दुलेखम्।
त्रिभुवनभुवनान्तर्द्योतभास्वत्प्रदीपम्
कनकनिकषगौरं चारुनेत्रं हरस्य।।
—पत्तसर—दानपत्राभिलेखे नटभाञ्जस्य

1300. तत्पातु लोचनं शम्भोरुमाश्लेषनिमीलितम्।
उत्तंसरजनीनाथनिद्राणमिव पङ्कजम्।।
—दानंरत्नाकरे चण्डेश्वरस्य

1301. ते वः पान्तु पिनाकिनः कतिपये क्रुद्धस्य भालस्थली-
जन्मानः किरणावलीस्तवकिताशान्ताः कृशानोः कणाः।
येषामेकतमस्य तेजसि जगज्जालं जिगीषूरिपुः
सन्धानेपि पतङ्गपातमपतत्पुष्पायुधः सायुधः।।
—होट्टल—अभिलेखे

1302. धूमश्यामककुम्भि भूधरतटन्त्रुद्यद्दृषन्ति स्फुटा-
टोपोल्लुण्ठितसागराम्पि विकलव्यालोकभास्वन्ति च।
दृप्यत्तूर्णमरुन्ति कातरतरभ्रश्यज्जगन्ति प्रभो-
रुद्यन्ति त्रिपुरान्तकृन्ति नयनादर्चींषि पुष्यन्तु वः।।

—सदुक्ति०

1303. नीललोहितललाटलाञ्छने लोचने जयति कोऽपि पावकः।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत्।।

—सूक्तिमु० मुरारेः

1304. पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो
यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव।
अर्चिर्निष्टप्तचूडाशशिगलितसुधासारझङ्कारिकोणम्
तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः।।

—मालतीमाधवे भवभूतेः

1305. पायाद्वः पुरदाहाय शम्भोः सन्दधतः शरम्।
समं व्यग्रेषु नेत्रेषु तृतीयमधिकं स्फुरत्।।

—कथासरित्सागरे दशमे लम्बके सोमदेवभट्टस्य

1306. प्रणमत नयने हरस्य पूजाकमलकुलं पदयोः कृतं कृतार्थैः।
विकसनविनिमीलने विचित्रं युगपदुपैति ययोर्विलोकनेन।।

—सूक्तिमु०

1307. यज्ज्योतिर्द्वादशार्कं हिमगिरिदुहितुर्यन्निशाकेलिदीपो
यत्कन्दर्पास्थितभस्मीकरणतरुणिताभ्यन्तरज्वाललेखम्।
कल्पान्ते जुह्वतो यत् त्रिभुवनसमिधं वेधसः पुण्यवह्नि-
र्बिभ्राणं बभ्रुकान्तिं त्रिनयननयनज्योतिरस्तु श्रिये वः।।

—सदुक्ति० अंशुधरस्य

1308. यज्ज्योतिस्तिग्मतेजस्त्रिपुर-कुलबलोद्धूलनोद्भूतचण्डम्
सत्यार्तौ दक्षदण्डि क्षितितल-सुजनश्रेयसेऽपूर्वभासम्।
ब्रह्माण्डोद्वेगवृद्धिव्यसनिशठजनोन्मूलनोदग्रदण्डम्
पायादार्ताभिवन्द्यं खलतिमिरहरं रुद्ररौद्रांशुनेत्रम्।।

—दिव्याचरिते योगेन्द्रपालस्य

1309. यत्राग्निरीप्सति कणं न विवृत्य जिह्वां
नैति प्रतिक्षपमपेतवसुस्तमर्कः।
क्षीणस्तमिन्दुरपि न श्रयति श्रियेऽस्तु
श्रीधाम तत्पुररिपोर्नयनत्रयं वः।।

—स्तुतिकु०

1310. यस्मिञ्जातस्त्रिभुवनजयी भग्नकामः स कामो
यस्मिंल्लेभे शलभलघुतां प्राप्तकालः स कालः।
यस्यौघो न प्रभवति महोनिह्नवे जाह्नवीयः
श्रेयः प्रेयः प्रथयतु स वः शाम्भवो दृक्त्रिभागः।।

—स्तुतिकु०

1311. यस्योन्मेषे निमीलत्यखिलमपि जगद्यन्निमेषेऽखिलाना-
मुन्मेषो विष्टपानामुपनमति यदग्नेरनङ्गः पतङ्गः।
आसुर्यश्चापि पुर्यस्त्रिभुवनकुशलायाहुतिर्यत्र भूता
रौद्रं तद्रुद्रनेत्रं रचयतु निटिलद्योतिभद्रोदयं वः।।

—वीरभद्रविजये कुमारडिण्डिमस्य

1312. यामाश्रितोऽम्बरमणी रमणीयधामा
कामान्तकावनलसाऽनलसद्व्यधाद्या।
यापीन्दुसम्भवसुधावसुधा दृशस्ताः
शर्वस्य वः शिवपुषो वपुषा भवन्तु।।

—स्तुतिकु०

1313. या राजहंसशिखिसंभृतकान्तिरेति
सद्यस्तिरोहितघनावरणा प्रसादम्।
सा प्रावृडन्तशरदादिदिनेष्विव द्यौः
शम्भोरभीष्टफलपाककृदस्तु दृग्वः।।

—स्तुतिकु०

1314. ललाटलोचनं पायात्प्रदीप्तं त्रिपुरद्विषः।
कुमाररक्षासिन्दूरं वितरन्किरणैरिव।।

—वृहत्कथामञ्जर्यां चतुर्थे लम्बके क्षेमेन्द्रस्य

1315. वक्त्राम्भोरुहि विस्मिताः स्तबकिता वक्षोरुहि स्फारिताः
श्रोणीसीमनि गुम्फिताश्चरणयोरक्ष्णोः पुनर्विस्तृताः।
पार्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्तु भद्राणि वो
विद्धस्यान्तिकपुष्पसायकशरैरीशस्य दृग्भङ्गयः।।

—सुभा०सुधा०भा०

1316. सानन्दा गणनायके सपुलका गौरीमुखाम्भोरुहे
सक्रोधा कुसुमायुधे सकरुणा पादानते वज्रिणि।
सस्मेरा गिरिजासखीषु सनया शैलाधिनाथे वहन्
भूमीन्द्र प्रदिशन्तु शर्म विपुलं शम्भोः कटाक्षच्छटाः।।

—सुभा०सुधा०भा०

## शिववक्त्रं

1317. संवर्ताग्नितडित्प्रतप्तकनकप्रस्पर्द्धितेजोऽरुणम्
गम्भीरश्रुतिसाधुपोषविलसत्प्रोच्छ्वासिताथर्वणम्।
अर्द्धेन्दुद्युतिलोलपिङ्गलजटाभारप्रबद्धोरगम्
वन्दे सिद्धसुरासुरेन्द्रविनुतं पूर्वं मुखं शूलिनः।।

—पञ्चमुखस्तोत्रे

1318. प्रालेयामलमिन्दुकुन्दधवलं गोक्षीरफेनप्रभम्
भस्माभ्यङ्गमनङ्गदेहदहनज्वालावलीलोचनम्।
ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभिः
वन्देऽहं सकलं कलङ्करहितं शम्भोर्मुखं पश्चिमम्।।।।

—शैवचिन्तामणौ

1319. बभ्रुभ्रूश्मश्रुकेशं शिखरमिव गिरेर्लग्नदावाग्निभालं
नेत्रैः पिङ्गोग्रतारैस्त्रिभिरिव रविभिश्छिद्रितः कालमेघः।
दंष्ट्राचन्द्रप्रभाभिः प्रकटितसुवृहत्तालुपातालमूलं
शम्भोर्वक्त्रं सुवक्त्रत्रितयभयकरं हन्त्वघं दक्षिणं वः।।।।

—रक्षोविभीषणस्य

## शिवकण्ठः

1320. कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे
रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति।
याः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागुरु-
स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः।।।।

—सुभा०सुधा०भा०

1321. कस्तूरीयन्ति भाले तदनु नयनयोः कज्जलीयन्ति कर्ण-
प्रान्ते नीलोत्पलीयन्त्युरसि मरकतालङ्कृतीयन्ति देव्याः।
रोमालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये
कल्याणं कुर्युरेते त्रिजगति पुरजित्कण्ठभासां विलासाः।।

—सुभा०सुधा०भा०

1322. कान्तिः श्रीकण्ठकण्ठस्य जयत्यालिङ्गनोत्सुका।
स्कन्धारुढेवकालिन्दीमौलिमन्दाकिनीर्ष्यया।।

—राघवपाण्डवीये कविराजपण्डितस्य

1323. क्वचिदलिपटलाभः कालकूटानुवेधात्-
क्वचिदमलतराभिर्भूतिभिः श्वेतकायः।
विमल इव जलौघौ यामुनः स्वार्धुनश्च
प्रणदतु दुरितं वो नीलकण्ठस्य कण्ठः।।

—कुम्भलगढ-अभिलेखे

1324. पातु वो नीलकठण्स्य कण्ठः श्यामाम्बुदोपमः।
गौरीभुजलता यत्र विद्युल्लेखेव राजते।।

—सुभाषितपद्धतौ श्रीपतेः

1325. पातु वः शितिकण्ठस्य तमालश्यामलो गलः।
संसक्तपार्वतीबाहुसुवर्णनिकषोपलः।।

—सुभा०सुधा०भा०

1326. याः स्फूर्ज्जत्फणभृद्विषानलमिलद्धूम्रप्रभाः प्रोल्लसन्
मूर्द्धावद्धशशाङ्ककोटिघटिता याः सैंहिकेयोपमाः।
याश्चञ्चद्गिरिजाकपोललुलिताः कस्तूरिकाविभ्रमा-
स्ताः श्रीकण्ठकठोरकण्ठरुचयः श्रेयांसि पुष्णन्तु वः।।

—गओन्रिपत्राभिलेखे वाक्पतिमुञ्जस्य

1327. युष्माकमस्तु नवलीलसरोजदाम-
श्यामद्युतिः सुमतये शितिकण्ठकण्ठः।
यः केतकीधवलवासुकिभोगयोगा-
गाङ्गौघभिन्नगगनाङ्गनभङ्गिमेति।।

—स्तुतिकु०

1328. श्रियं दिशतु वः शम्भोः श्यामः कण्ठो मनोभुवा।
अङ्गस्थपार्वतीदृष्टिपाशैरिव विवेष्टितः।।

—कथासरित्सागरे सोमदेवभट्टस्य

## शिवकरः

1329. उपास्थास्नोरुष्णः ककुदशिखरास्फालनकला-
खलात्कुर्वद्दर्वीकरकटकचूडामणिगणः।
सहारोहद्गौरीपदकमलधूलीभरहरः
करः शम्भोः श्रीमान्परमभयमभ्यादिशतु वः।।

—सुभा० सुधा०

1330. सिन्दूरकाश्मीररजरञ्जितश्शयो
यस्यामलेन्दीवरकान्तिसोदरः।
देवेन्द्रहस्तीन्द्रसमानशोभया-
पृक्तः स शैवोस्तुतरां शिवाय नः।।

—धर्मप्रदीपे भैरवदत्तपण्डितस्य

## शिववक्षःस्थलम्

1331. हारीकृतोल्बणफणीन्द्रफणेन्द्रनील-
नीलच्छविच्छुरणशारमुरःस्थलं वः।
पुष्णातु निह्नुतनगेन्द्रसुताकुचाग्र-
कस्तूरिकामकरिकाकिणमिन्दुमौलेः।।

—स्तुतिकु०

## शिववरमाला

1332. वृषकेतनस्य हृदये वरणस्रग्जयति गिरिभुवा निहता।
कुण्डलनेवानङ्गप्रतिकूलाशेषवृत्तीनाम्।।

—आर्या सप्तशत्यां विश्वेश्वरपण्डितस्य

# शिवाङ्घ्रिः

1333. उपहरणं विभवानां संहरणं सकलदुरितजालस्य।
उद्धरणं संसाराच्चरणं वः श्रेयसेऽस्तु विश्वपतेः।।

—सुभा०सुधा०भा०

1334. अंहस्संहतिहारिणोरतिदृढाम्भक्तिं ययोः कुर्वता-
मत्रामुत्र च सम्भवन्त्यविकलास्सम्पत्तयो देहिनाम्।
उत्तंसाम्बुरुहश्रियं कलयतो यावुत्तमाङ्गेलसन्
मौलौ नाकसदां पिनाकिचरणौ तौ वश्चिरं रक्षताम्।।

—मद्राससंग्रहालयस्थपत्राभिलेखे जटिलवर्मणः

1335. कैलासे केलिकाले प्रियवचनरतार्द्धाङ्गिनीदत्तदृष्टेः
श्रुत्वा हा-हेति दूराज्झटिति शरविनां रक्षणायोत्थितस्य।
देव्याः सम्भ्रान्तयाङ्कात्परिपतनभयादाश्रितः शङ्करस्य
त्रैलोक्याधारहेतुर्दुरितभयहरः पातु नः पाददण्डः।।

—पाददण्डे वनमालाभवालकरस्य

1336. जयन्ति बाणासुरमौलिलालिता
दशास्यचूडामणिचक्रचुम्बिनः।
सुरासुराधीशशिखान्तशायिनो
भवच्छिदस्त्र्यम्बकपादपांसवः।।

—कादम्बर्यां बाणभट्टस्य

1337. त्वां पातु लक्षणाढ्यस्सुरवरमुकुटेन्द्रचारुमणिघृष्टः।
रावणनमिताङ्गुष्ठो रूद्रस्य सदार्चितः पादः।।

—भगवदज्जुकीये बोधायनस्य

1338. द्रुहिणहरिहराद्यैर्देववृन्दैर्नभस्यं
दददभिमतमर्थं भक्तिभाजां जनानाम्।

परिहृतसकलार्थैर्योगिभिर्ध्यायमानं
हरचरणसरोजंक्षेमकामाभजध्वम् ।।

—मुद्राप्रकाशे रामकिशोरशर्मणः

1339. प्रालेयाचलकन्यकाकुचतटीपत्रावलीशिल्पिनः
प्रेङ्खद्भालविलोचनानलशिखा निष्पीतचेतोभुवः।
देवस्येन्दुविभूषणस्य सुचिरं पादारविन्दद्वयम्
युष्मान् पातु सुरासुरेश्वरशिरोरत्नांशुकिञ्जल्कितम् ।।

—एकावल्यां विद्याधरस्य

1340. बीजानि कल्याणलताङ्कुराणां
दीपास्त्रिलोकीतिमिरावलीनाम्।
पुण्यात्मकानामपि पावनानि
जयन्ति शम्भोः पदयोः रजांसि।।

—बरौडी—अभिलेखे

1341. शशिभानुवृहद्भानुस्फुरत्त्रितयचक्षुषः।
वन्दे शम्भोः पदाम्भोजमज्ञानतिमिरद्विषः।।

—कीर्त्तिलतायां विद्यापतेः

1342. श्रेयोवल्लिवनाङ्कुराः कुजननश्रेणीपिधानेऽर्गला
मोहद्रोहणमुद्गराः शिवसुखारोहे महारज्जवः।
अंहः संहतिजैत्रधर्मविजयस्तम्भाः शुभं भाविनां
पुष्यासुर्वृषभप्रभोः पदनखप्राप्तोदया रश्मयः।।

—पद्मानन्दमहाकाव्ये अमरचन्द्रसूरिणः

1343. श्रेयः प्रयच्छतु परं सुविशुद्धवर्णा
पूर्णाभिलाषविबुधाधिपवन्दनीया।
पुण्या कविप्रवरवागिव बालचन्द्र-
चूडामणेश्चरणरेणुकणावली वः।।

—स्तुतिकु०

1344. सद्बुद्धिकल्पद्रुमरत्नरम्ये
दुःसम्प्रदायग्रहिलैकनक्रे।
न्यायार्णवे सन्तरणाय रम्या
सदा शिवाङ्घ्रिस्मृतिरस्तु नौ र्मे।।

—न्यायकुसुमाञ्जल्याष्टीकायां गोपीनाथमौनिनः

## शिवमुण्डमाला

1345. गाढग्रन्थिप्रफुल्लद्गलविकलफणापीठनिर्यद्विषाग्नि
ज्वालानिष्टप्तचन्द्रद्रवदमृतरसप्रोषितप्रेतभावाः।
उज्जृम्भा बभ्रुनेत्रद्युतिमसकृदसृक्तृष्णयालोकयन्त्यः
पान्तु त्वां नागनालप्रथितशवशिरःश्रेणयो भैरवस्य।।

—सदुक्ति० भवभूतेः

1346. जयति भुजगरज्जुग्रन्थिनिष्पीडितेन्दु-
स्रवदमृतनिवृत्तप्रेतभावैः कपालैः।
विरचितनुतिबन्धो मूर्द्धि सद्यः पुरारेः
परिणतबहुकल्पब्रह्मणां घोषः।।

—सदुक्ति०

1347. पायाद्वः स शिरांसि ताण्डवविधौ यम्मूर्ध्नि खिन्नोरग-
श्वासाग्निद्रुतचूडचन्द्रसुधया प्राणन्त्यकस्माद्विधेः।
ऋक्सामे कतिचित् पठन्ति कतिचिन्मज्जन्ति गङ्गाजले
स्वात्मानं कतिचिन्मनन्ति कतिचिन्नेत्रानले जुह्वति।।

—सदुक्ति० वामदेवस्य

1348. लिप्ता लालाटनेत्रस्फुरदुरुदहनज्वालजालप्रतापो-
त्ताम्यत्कोटीरभारस्थिरशशिशकलप्रस्रुताभिः सुधाभिः।

अन्तर्नृत्यप्रमोदप्रचलितशिरसश्चन्द्रमौलेः कपालाः
कल्याणं वः क्रियासुः स्तुतिमभिदधतस्ताण्डवाडम्बरेषु।।

—सदुक्ति० नरसिंहस्य

1349. शान्त्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिं
क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षरम्।
विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यते शिष्यते
नागान्नागिषु रंस्यते स्यति जगन्निर्वेक्ष्यति द्यामिति।।

—सदुक्ति०

## शिवबाणानलः

1350. कल्याणं वः क्रियासुर्मिलदटनियुगस्थास्नुगीर्वाणभोगि-
स्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनोनागहारावलीनि।
नालीकाश्लिष्टलक्ष्मीकरतलनलिनोद्वान्तमाध्वीकधारा
तिम्यत्कालेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि।।

—सुभा० सुधा० भा०

1351. क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तम्
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः।।

—सारसङ्ग्रहे शम्भुदासपण्डितस्य

1352. चापं मुष्टिर्भवान्याः सरसिजमुकुलश्रीः कथं वा विधत्ते
प्रत्यालीढं कथं वा रचयतु मणिमन्नूपुरो वामपादः।
इत्थं यावद्वितर्कं विदधति विबुधास्तावदग्रे य आसी-
द्बाणाग्निः प्लुष्टदैत्यो मयपुरमथने धूर्जटेः सोऽवताद्वः।।

—सदुक्ति०

1353. धूमैःश्यामलयन्मुखानि नयनान्याप्लावय न्नश्रुभिः
सन्तापपार्तिपराभवं पृथुशिखाचक्रेण विस्तारयन्।
हर्षोत्कर्मसमागमेऽपि दिविषद्वर्गस्य शोकोचित-
व्यापारस्त्रिपुरं दहन्विजयते भर्गस्य बाणानलः।।

—त्रिपुरदाहडिमे वत्सराजस्य

1354. पिङ्गैः कुर्वन्कुजमयमिव व्योमतुङ्गैः स्फुलिङ्गै-
र्बिभ्रद्धूमान्सुरपतिभियोड्डीयमानानिवाद्रीन्।
मन्दाकिन्याः क्वथनमुखरं नर्त्तयन्वारिपूरं
बाणस्याग्निः स जयति पुरप्लोषकारः पुरारेः।।

—त्रिपुरदाहडिमे वत्सराजस्य

1355. वाष्पैर्वीताङ्गरागच्छविषु विरचयन्नच्छधूमच्छटाभिः
कस्तूरीपत्रमायामथनगरवधूवर्गवक्षोरुहेषु।
आसामम्लानपुष्पस्तवकनवकलामंशुभिः कुन्तलेषु
व्याकुर्वन्नन्धकारं हरतु हरशरोद्गारजन्मानलो वः।।

—सदुक्ति० जलचन्द्रस्य

1356. विष्वग्व्याधूय धूमप्रचययवनिकां स्फायमानस्फुलिङ्ग-
व्याजादाकीर्य पुष्पाञ्जलिमुपरि पदं न्यस्यतो मन्दिराणाम्।
स्वच्छन्दाभोगसीमा महति मयपुरे दत्तरौद्राङ्गराग-
व्याप्ताशेषस्य विश्वेश्वरशरशिखिनस्ताण्डवं नः पुनातु।।

—वैद्यगदाधरस्य

1357. सिन्दूरश्रीर्ललाटे कनकरसमयः कर्णपाशावतंसो
वक्त्रे ताम्बूलरागः पृथुकुचकलसे कुङ्कुमस्यानुलेपः।
दैत्याधीशाङ्गनानां जघनपरिसरे लाक्षिकक्षौमलक्ष्मी-
रश्रेयांसि क्षिणोतु त्रिपुरहरशरोद्गारजन्मानलो वः।।

—मङ्गलस्य

## शिवशूलं

1358. येनोत्तम्भिदुर्मदान्धकतनुच्छत्रस्य दण्डायितं
यत्प्राप्यायुधमङ्गनाऽपि दनुजध्वंसं चकाराऽम्बिका।
यद्दृष्ट्वैव बिडौजसो लिखितवद्दम्भोलिरासीत्करे
चन्द्रार्द्धाभरणस्य तद्भगवतः शूलं शिवायास्तु वः।।

—किरातार्जुनीयव्यायोगे वत्सराजस्य

## शिवकेतुः

1359. वेपन्ते यस्य भीमस्तनितभयसमुद्भ्रान्तचित्ता दिगन्ताः
शृङ्गाघातैः सुमेरोर्विघटितदृषदः कन्दरा यः करोति।
उक्षाणं तं दधानः क्षितिधरतनयादत्तपञ्चाङ्गुलाङ्कं
द्राघिष्ठः शूलपाणेः क्षपयतु भवतां शत्रुतेजांसि केतुः।।

## शिवसमाधिः

1360. आकर्णकृष्टधनुराहितमोहनास्त्र-
मारान्निरीक्ष्य मदनं कुपितस्य किञ्चित्।
शम्भोः समाधिसमये विकसत्कृशनु-
ज्वालाकलापजटिलं निटिलं स्मरामि।।

—कण्ठाचार्यविरचितब्रह्मसूत्रभाष्यस्य टीकायां
शिवार्कमणिदीपिकाख्यायां अप्पयदीक्षितस्य

1361. कान्तां कामपि कामयत्यनुदिनं ध्यानापदेशादयं
येनामुं मुनयोऽप्यनादिनिधनं ध्यायन्ति धौतस्पृहाः।
इत्याङ्क्तत्स्वकरे हृते गिरिजया पादे च पद्मासनाद्विश्वं
पातु पुरन्ध्रिनद्धवपुषः शम्भोः समाधिव्ययः।।

—सुभा०सुधा०भा०

1362. पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-
रन्तः प्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य।
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या
शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः।।

—मृच्छकटिके शूद्रकस्य

## शिवगणाः

1363. सन्ध्याताण्डवडम्बरव्यसनिनो देवस्य चण्डीपते-
र्भ्रष्टापीडविशीर्णमुण्डचयनव्यग्रा गणाः पान्तु वः।
यैरौत्सुक्यवशीकृतैर्ग्रहगणाद्राहौ गृहीते हठा-
त्सूर्याचन्द्रमसोर्मिथः स्मितवतोर्जातं करास्फालनम्।।

—शा०प०

## काशीविश्वनाथः

1364. आशीविषगणकाशी काशीराजः करालगरलाशी।
देवस्त्रिपुरविनाशी राशीभूतं मनोमलं हरतु।।

—स्मृतिप्रकाशे हरिभट्टसुत—आपाजीभट्टसुत—भास्करस्य

1365. कण्ठे यस्य लसत्करालगरलं गङ्गाजलं मस्तके
वामाङ्गे गिरिराजराजतनया जाया भवानी सती।
नन्दिस्कन्दगणाधिराजसहितः श्रीविश्वनाथः प्रभूः
काशीमन्दिरसंस्थितोखिलगुरुर्देयात् सदामङ्गलम्।।

—विश्वनाथस्तोत्रे

1366. गौरीप्रेमानुबन्धत्रिभुवनजनताभक्तिभावातिरेक-
ब्रह्मेन्द्रोपेन्द्रचन्द्रप्रमुखसुरतपः सञ्चयैनिर्गुणोऽपि।
पञ्चक्रोशात्मकं यः सुरधुनिविलसद्दृश्यमानं स्वरूपं
बिभ्रच्छ्रीविश्वनाथः स भवतु भवतां भावुकोद्रेकदाता।।

—रत्नावल्यां कृष्णपण्डितस्य

1367. श्रीगौर्यां सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदम्
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना।
वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात्परं
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम्।।

—शाङ्करब्रह्मसूत्रभाष्यस्य व्याख्यायां रत्नप्रभाख्यायां
गोविन्दानन्दस्य

1368. श्रीशैलराजतनयैकरदाङ्किताङ्कं
मन्दाकिनीसुततरलीकृतसज्जटालिम्।
बालेन्दुरश्मिपरिशोभितभालदेशं
श्रीविश्वनाथमनिशं समुपास्महे तम्।।

—फक्किकारत्नमञ्जूषायां

1369. साम्बं सदाशिवमखण्डसुखैकराशिं
संसेव्यमानमनिशं मुनिदेववृन्दैः।
भागीरथीविपुलतीरकृताधिवासं
वाराणसीपुरपतिं प्रणमामि शश्वत्।।

—विश्वनाथकविराजकृत— साहित्यदर्पणस्य टीकायां
लक्ष्मीत्याख्यायां कृष्णमोहनशास्त्रिणः

## केदारनाथः

1370. गङ्गातरङ्गतरलीकृतसर्पराज-
वेष्टाय चारुशशिखण्डविभूषणाय।
कन्दर्पदर्पशमनाय सुरार्चिताय
केदाररुपविधृताय नमः शिवाय।।

—अभिलेखे

## वैद्यनाथः

1371. विद्या विद्यत एव यत्र सततं वेद्यो न यो रागिणां
यं वैद्यं मनसा प्रपद्य विषयव्यालेष्वभीका बुधाः।
वेदाशेषविचारसीमविलसत्सिद्धान्तभूमिः स मे
विद्युत्य द्यतु हृद्‌यवद्यमखिलं श्रीवैद्यनाथः शिवः।।

—अलिविलासिसंलापे

## सोमेश्वरः

1372. देवः स्वार्थशिवानवानुनयसंस्फूर्त्योत्तमाङ्गायनात्
गङ्गां भुव्यपवाह्य गौतमतपस्सिद्धिच्छलादुत्सुकः।
इत्थं बुद्धधियेव कोटिपलिसंस्थाने निरुद्धस्तया
पार्श्वं दक्षिणमाप्तयोभयसखस्सोमेश्वरः पातु नः।।

—त्रिपुरविजयव्यायोगे पद्मनाभस्य

1373. यन्नो गोचरयन्ति लोचनरुचो वाचो निवृत्ता यतः
चेतो मुह्यति यत्र यच्च न यतैः पन्थानमालम्बते।
सन्निष्कैतवभक्तियोगसुलभं सोमेशलिङ्गस्थलं
स्पष्टीभूतमभिष्टुवामहितमां किञ्चिन्महश्चिन्मयम्।।

—अभिलेखे

1374. श्रीमदैपुरसोमेशलिङ्गायालिङ्गरुपिणे
लिङ्गाङ्गैक्यस्वलिङ्गाय नमस्ते लिङ्गमूर्त्तये।
नमः शब्दमुमा साक्षच्छिवशब्दः शिवः स्वयं
आयशब्दस्तयोर्योगः सोमतत्त्वमुपास्महे।।

—विशेषार्थप्रकाशके मायिदेवस्य

## रामेश्वरशिवः

1375. सिन्धुतीरनिवासोऽयं मडनूरिपुरीश्वरः।
रामेश्वरमहादेवो लोकान् रक्षतु शाश्वतम्।।

—मडनूरु— अभिलेखे

## मैलारशिवः

1376. शुभ्राङ्गं पीतवस्त्रं सुरतरुसदृशं सूर्यकोटिप्रकाशं
नानाभूषासमेतं नलिनभवनुतं नागयज्ञोपवीतम्।
शूलं पात्रं च खड्गं डमरुकमतुलं पाणिपद्मे दधानं
मैलाराख्यं महेशं मणिमयमकुटं मालचीनाथमीडे।।

—सूर्यसिद्धान्ते

## अमृतेशः

1377. कर्पूरक्षोदगौरं धृतकपिलजटं त्र्यक्षणं चन्द्रमौलिं
सौधं कुम्भं सुधांशुं वरयुतमभयं दोश्चतुष्कं दधानम्।
वामोत्सङ्गे वहन्तं विविधमणिगणालङ्कृतामुज्वलाङ्गीं
शर्वाणीं स्वानुरुपां तमनिशममृतेशाख्यमीशं स्मरामि।।

—निघण्टुराजे नरहरे

## कार्त्तिकेयः

1378. अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुके-
स्तर्जन्या विषकर्बुरान् गणयतः संपृश्य दन्ताङ्कुरान्।
एकं त्रीणि नवाष्ट सप्त षडिति व्यस्तास्तसङ्ख्याक्रमा
वाचः शक्तिधरस्य शैशवकलाः कुर्वन्तु वो मङ्गलम्।।

—सदुक्ति० बाणस्य

1379. कनककुण्डलमण्डितषण्मुखं वनजराजिविराजितलोचनम्।
निशितशस्त्रशरासनधारिणं शरबणोद्भवमीशसुतं भजे।।

—पारिजातरत्नाकरे

1380. कल्याणानि करोतु वः स भगवान् कात्यायनीनन्दनो
यस्याभ्यन्तरमम्बिकाजनकयोर्यातस्यलीलाविधौ।
साकं भाति तदाननैर्मुखततिः छायाधिपस्पर्धया
स्वात्मानं बहुधेव संभृतवतश्चन्द्रस्य बिम्बावलिः।।

—अद्वैतविद्यातिलके समरपुङ्गवदीक्षितस्य

1381. गौरीगिरीशयोरङ्कादङ्के कृतगतागतम्।
उद्यद्दशनषड्वक्त्रमुमासुतमहं भजे।।

—शिवभक्तविलासे

1382. तं प्रणौमि वदनानि शङ्करो यस्य लालयति पञ्चभिर्मुखैः।
एकमाकलितशोकमम्बिकापर्यजिघ्रदतिसम्भ्रमान्मुखम्।।

—पाण्ड्यकुलोदये मण्डलकवेः

1383. नालैर्नीलोत्पलानां रचितगुरुजटाजूटविन्यासशोभः
कृत्वा संभुग्नकोटिद्वियमथ विसिनीकन्दमिन्दोः प्रदेशे।
मातुश्चित्रांशुकेन त्वचमुचितपदे पौण्डरीकीं निधाय
क्रीडारुद्रायमाणो जगदवतु गुहो वीक्ष्यमाणः पितृभ्याम्।।

—सदुक्ति० हलायुधस्य

1384. नृत्यति कलापिनि निजे लम्बोदरपुष्करोत्थघननिनदैः।
रविनयनैस्तं पश्यन् शक्तिधरः षण्मुखो जयति।।

—शिवभक्तविलासस्य टीकायां प्रकाशिकाख्यायां नृसिंहस्य

1385. यस्यद्विरदवक्त्राघाः शाशनेस्थिरवृत्तयः।
स मे वैकुण्ठसेनानीर्भूयात्सर्वत्रविघ्नहा।।

—प्रपन्नपारिजाते वरदाचार्यश्रीवत्सस्य

1386. विकसदमरनारीनेत्रनीलाब्जषण्डा-
न्यधिवसति सदा यः संयमाधः कृतानि।
नवरुचिरकलापे वर्त्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः।।

—सूक्तिमु०

1387. शरण्यः सर्वदेवानां दनुवंशदवानलः।
शक्तिमान् धृतिमान् शान्तः कार्त्तिकेयोऽस्तु मे गतिः।।

—सुभा० सुधा० भा०

1388. शैलराजतनयास्तनयुग्मव्यापृतास्य युगलस्य गुहस्य।
शेषवक्त्रकमलानि मलं वो दुग्धपानविधुराणि हरन्तु।।

—सुभा०

1389. श्लाघ्यः पुत्रः स भवति किल स्वस्य शारीरयोगात्
धत्ते कैश्चित्क्वचिदपि गुणैर्यः समुत्कर्षलेखाम्।
इत्थं वाञ्छन् पितुरधिकतां पञ्चवक्त्रस्य नूनं
षष्ठं बिभ्रद्वदनमपरं पातु विश्वं विशाखः।।

—अमरेश्वरमन्दिरस्य अभिलेखे

1390. सुप्तं पक्षपुटे निलीनशिरसं दृष्ट्वा मयूरं पुरः
कृत्तं केन शिरोऽस्य तात कथमित्याक्रन्दतः शैशवात्।
अन्तर्हासपिनाकिपाणियुगलस्फालोल्लसच्चेतस-
स्तन्मूर्धेक्षणहर्षितस्य हसितं पायात्कुमारस्य वः।।

—सदुक्ति०

1391. स्वेच्छारम्यं लुठित्वा पितुरुरसि चिरं भस्मधूलीचिताङ्गो
गङ्गावारिण्यगाधे झटिति हरजटाजूटतो दत्तझम्पः।
सद्यः सीत्कारकारी जलजडिभरणद्दन्तपंक्तिर्गुहो वः
कम्पी पायादपायाज्ज्वलितशिखिशिखे चक्षुषि न्यस्तहस्तः।।

—सदुक्ति० बाणस्य

1392. हंसश्रेणिकुतूहलेन कलयन् भूषाकपालावलीं
बालामिन्दुकलां मृणालरभसादान्दोलयन् पाणिना।
रक्ताम्भोजधिया च लोचनपुटं लालाटमुद्धाटयन्
पायाद्वः पितुरङ्कभाक् शिशुजनक्रीडोन्मुखः षण्मुखः।।

—सदुक्ति० बलभद्रस्य

# हनुमान्

1393. अञ्जनानन्दनं वीरञ्जानकीशोकनाशनम्।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम्।।
—वाल्मीकिरामायणस्य विषमपदव्याख्यायां रामभट्टस्य

1394. अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता।
अनेकदुःखाहतलोकगोप्ता त्वसौ हनूमांस्तव सौख्यकर्ता।।
—सुभा०सुधा०भा०

1395. आञ्जनेयमतिपाटलाननं काञ्चनाडिकमनीयविग्रहम्।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम्।।
—वाल्मीकिरामायणस्य विषयपदव्याख्यायां रामभट्टस्य

1396. आमिषीकृतमार्त्तण्डङ्गोष्पदीकृतवारिधिम्।
तृणीकृतदशग्रीवमाञ्जनेयं नमाम्यहम्।।
—वाल्मीकिरामायणस्य विषमपदव्याख्यायां रामभट्टस्य

1397. उद्दामोल्लङ्घिताब्धिं दशवदनपुरोद्यानमानाभिघात-
प्रख्यातोद्दण्डबाहुद्वयशिशिरतरुच्छायविश्रान्तलोकम्।
वैदेहीदुःखशुष्यद्रघुपतिहृदयाम्भोजमध्यन्दिनार्कं
किञ्चत्तेजस्तदैशं पवनतनुसमुद्भूतमन्तः स्मरामि।।
—पिङ्गलप्रकाशे वंशीधरस्य

1398. उद्यत्खद्योतबिम्बं पृथुलफलधियादित्सुरौत्सुक्यतो यो
हस्तात् प्रस्थादुदस्थान्नभसि सरभसोरिष्टभूभृद्वरिष्ठे।
उद्गच्छत्पुच्छवातोच्चलदचलगणोत्तुङ्गशृङ्गोद्धृताम्भो-
वाहव्यूहो विदल्यादहितमिह महोद्दामभूमा हनूमान्।।
—हनुमदष्टके वेङ्कटाचार्यस्य

1399. उद्यद्दिनेशकररञ्जितकञ्जवक्त्र-
मारक्तनेत्रमतिसुन्दरचारुगात्रम्।
वातात्मजं प्रखरदन्तनखायुधाढ्यं
वीरं कपीश्वरमहं सततं स्मरामि।।
—लक्ष्मीश्वरभूषणालङ्कारप्रबन्धे मथुराप्रसादसूनोर्शिवप्रसादस्य

1400. उल्लङ्घ्य सिन्धोस्सलिलं सलीलं
यश्शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्का-
न्नमामि प्राञ्जलिराञ्जनेयम्।।
—वाल्मीकिरामायणस्य विषमपदव्याख्यायां रामभट्टस्य

1401. कृतक्रोधे यस्मिन्नमरनगरीमङ्गलरवा
नवातङ्का लङ्का समजनि वने वृश्चति सति।
सदा सीताकान्तप्रणतिमतिविख्यातमहिमा
हनूमानव्याद्वः कपिकुलशिरोमण्डनमणिः।।
—खण्डप्रशस्त्यां हनुमत्कवेः

1402. गते हृदि निराशतां कपिकुलेऽखिलेऽन्विष्य यो
विदेहतनयां हितं रघुपतेः प्रतीर्योदधिम्।
प्ररक्ष्य प्रियलक्ष्मणं सगिरिमौषधिं चाप्यहो
समर्प्य कृतवानयं जयति केशरीनन्दनः।।
—रामदीनकृत—बृहद्दैवज्ञरञ्जनस्य टीकायां श्रीधरी—
नाम्न्यां मुरलीधर—चतुर्वेदिनः

1403. गोष्पदीकृतवारीशम्मशकीकृतराक्षसम्।
रामायणमहामालारत्नं वन्देऽनिलात्मजम्।।
—वाल्मीकिरामायणस्य टीकायां विषमपदाख्यायां रामभट्टस्य

1404. घोरब्रह्मास्त्रवीर्योन्मथितकपिचमूवीक्षणोद्बुद्धकोपो-
द्वृद्धोऽथोत्पातिभीमापघनजवसमाघातभिन्नाम्बुदौघः।
पुच्छाग्राघातकम्प-त्रुटदुरुकटकग्रावफाट्कारघोर-
द्रोणाद्रिः सर्वदा वः शमयतु विपदं कामदो रामदूतः।।

—आञ्जनेयस्तोत्रे

1405. प्राप्तः पाथोधिपारं पृथुपथपृथिवीपुत्रिकापत्प्रपन्नः
पौलत्स्यप्राणपीडाप्रणयनपटिमापारपाण्डित्यपात्रम्।
प्रौढप्रेमाम्बुपूरः प्रणतपरपदप्रापको रामकार्यम्
पर्याप्तं पारयिष्यन्पशुपतिपठितः पावमानिः पुनातु।।

—वाल्मीकिरामायणस्य विषमपदव्याख्यायां रामभट्टस्य

1406. भवकोदण्डविदितबाहुदण्डैकचण्डिमा
भव्याय भूयादव्याजकरुणः कोऽपि भूपतिः।
वीरराघवपादाब्जसंसक्तस्वान्तषट्पदः
तीर्णस्सारस्वतः पूर्णो हनूमान् स तु भूतये।।

—त्र्यम्बकशास्त्रिपत्रे त्र्यम्बकशास्त्रिणः

1407. मनोजवम्मारुततुल्यवेगञ्जितेन्द्रियम्बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं मनसा स्मरामि।।

—वाल्मीकिरामायणस्य विषदपदव्याख्यायां रामभट्टस्य

1408. यत्र यत्र रघुनाथकीर्त्तनन्तत्रतत्र कृतमस्तककाञ्जलिम्।
वाष्पवारिपरिपूर्णलोचनं मारुतिन्नमतराक्षसान्तकम्।।

—वाल्मीकिरामायणस्य विषमपदव्याख्यायां रामभट्टस्य

1409. रामप्रेनिकेतनं कविवरालङ्कारचूडामणिः
सीमावीरसरस्वतो दिनमणो विद्यार्थिनामग्रणीः।

व्यग्रग्रीवविलीनजीवभयभृत्सुग्रीवसीतापति-
प्रीतिश्रीपतिभूरभूज्जयति यः पायात्स नो मारुतिः।।

—वाल्मीकिरामायणस्य विषमपदव्याख्यायां रामभट्टस्य

1410. वज्राङ्गं वज्रदंष्ट्रं खलदवदहनं कोटिसूर्यप्रकाशं
रुद्रं ब्रह्मादिसेव्यं दशमुखभयदं काञ्चनाभं कपीशम्।
पिङ्गाक्षं पीतवस्त्रं पवनसमजवं रामदूतं प्रसन्नम्
लङ्कातङ्कप्रदं तं कपिकुलतिलकं वातजातं नमामि।।

—तुलसीतत्त्वभास्करे हरिहरप्रसादस्य

1411. स पातु यः प्रतापाग्निपाकपिण्डीकृताम्भसम्।
सेतुना पुनरुक्तेन ततार क्षारवारिधिम्।।

—सूक्तिमु०

1412. सीतारमणपदाब्जप्रविष्टदृष्टिं कृताञ्जलिः प्रणतम्।
मारुतसुतमहमीशं स्मरामि खलकक्षपावकं वीरम्।।

—वाल्मीकिरामायणस्य विषमपदव्याख्यायां रामभट्टस्य



# Abbreviations

(Used in notes)

| | |
|---|---|
| AL | Descriptive Catalogue of Sanskrit Manuscripts in the Adyar Library, Adyar, Madras. |
| ALRC | Descriptive Catalogue of Sanskrit Manuscripts in Adyar Library and recearch centre, Adyar, Madras. |
| AS | Descriptive catalogue of Sanskrit Manuscripts in the collection of the Asiatic Society, Calcutta. |
| ASI | Archaeological Survey of India |
| BORS | Descriptive catalogue of Sanskrit Manuscripts in Bihar and Orissa Research Society Patna. |
| Catal | Catalogue. |
| E. I. | Epigraphia Indica |
| GNJ | Ganga Nath Jha Kendriya Sanskrit Vidyapeetha, Allahabad. |
| GOML | Descriptive catalogue of Sanskrit Manuscripts in the Govt. Oriental Manuscript Library, Madras. |
| GVL | Govt. Vir Library Nepal. |
| I H Q | Indian Historical Quarterly |
| Ins. | Inscription |
| JAHRS | Journal of Andhra Historical Research Society |
| JBORS | Journal of Bihar and Orissa Research Society. |
| MPL | Descriptive catalogue of the Sanskrit Manuscripts in H. H. The Maharajaha's Palace Library Trivandrum. |
| Ms. | Manuscript |
| OHRJ | Orissa Historical Research Journal, Bhuvaneswar |
| RASB | Descriptive catalogue of the Sanskrit Manuscripts in the Royal Asiatic Society of Bengal, Calcutta. |
| SA | Subhasitavali of Vallabhadeva edited by Peter Peterson Poona 1961. |
| San. | Sanskrit. |
| SC | Descriptive catalogue of Sanskrit Manuscripts in Sanskrit Collage Calcutta. |

| | |
|---|---|
| SK | Sadukti-Karnamrita of Sridhardasa edited by Sures Chandra Benerji Callcutta-1965. |
| SMA | Suktimuktavali of Bhagadatta Jallhana edited by Embar Krishnamacharya Baroda - 1938. |
| SML | Descriptive catalogue of the Sanskrit Manuscripts in the Tanjore Maharaja Sarfoji's Saraswati Mahal Library, Tanjore, Srirangam. |
| SP | Sarangadhar Paddhti Compiled by Sarangadhar edited by Peter Peterson Delhi, 1987. |
| SR | Suktiratnakar. |
| SRH | Suktiratnahara edited by K. Sambasiva Sastri Trivandrum - 1938. |
| SS | Subhasita - Sudhanidhi of Sayana Edited by K. Krishnamoorthy Dharwar - 1968. |
| SSRB | Subhashitasudha - Ratna - Bhandagaram Compiled and edited by Shivadatta Kaviratna Bombay. |

# NOTES

***Verse No.***

1. In GNJ Ms. 21823
2. *Vide* Catal. of GOML, Madras, Vol. IX, Ms. 4526.
4. In GNJ Ms. 21601. Also in SA Sloka - 9.
6. In GNJ Ms. 24419, वरं देवं is emended from the reading वरादि.
7. In GNJ Ms. 24757. Also in GNJ Ms. 18252- ''अन्त्याक्षरीश्लोक संग्रहः'' *v.l.* कुलानेक for कुलानीक in this Ms.
8. In GNJ Ms. 45802 Catal. of GVL Nepal Vol. II, Ms R.No. प्र 548. Also in SSRB 3.8, *v.l.* द्विपमुखो for गणाधिपो.
11. In Yenamadala Ins. of Ganapati, 1249 AD *Vide* E. I. III, PP. 96-97.
14. In Malhar Ins. of jajalladeva (Cedi), 1167 AD., *Vide* E.I.I,P. 40.
15. *Vide* Catal. of RASB, Cal. Vol. VIII. Part II, Ms 6463.
16. From SSRB 3.11. poet's name not mentioned.
18. *Vide* Catal. of GOML, Madras. Vol. IV Part I, Ms. 3687
21. *Vide* Catal. of RASB cal. Vol. VI'I Part II, Ms. 6648.
23. In GNJ Ms. 15306 v.l. तच्चरण for यच्चरण and प्रणाम for प्रताप in the pub. text.
24. In Dandapalle Plates of Vijaybhupati, *Vide* E.I. XIV, P.71.
25. In GNJ Ms. 19194. वरप्रदान is read as तरदान
26. In GNJ Ms 16469. *v.l.* विवृत for विधृत in pub. text. Also in SSRB 4.34
28. From SMA 2.48.
29. In GNJ Ms. 41521. Also in Ms ''टोडरानन्दज्योतिषम्'' of नीलकण्ठ mentioned in Catal. of GVL Nepal R. No. 474.
30. *Vide* Catal. of GOML, Madras, Vol. XI, Ms. 5493.
31. In GNJ Ms 12625. v.l. विधावन् for पिधावन; स्पर्शया for स्पर्द्धया; साधारत्वं for माधावत्वं and धक्षत्वाद्भिर्वि for त्याम्बा वाग्भिर्निरुद्धा in Ms No. 179, प्रमिताक्षरा of राम *vide* catal. of BORS, Patna, Vol. III. *v.l.* मुण्डः For शुण्डः प्रहरतिभिरतो for प्रहतिभिरभितो and धस्त्रि for धरित्री in GNJ Ms 16693, ''मुहुर्त्तचिन्तामणिटीका'' of राम
32. This verse Also in catal. of GOML, Madras, Ms, 3097, *v.l.* वक्त्रोर्मि for वक्रोर्मि
33. In GNJ Ms 11823 *v.l.* विघ्नेशं मधु for प्रस्यन्दमद; रिरुधिरैः for हितजनं ''चन्द्रकुण्डलीफलम्'' in GNJ Ms 10999.
34. From SSRB 3.9, Annonymous.

35. *Vide* catal. of BORS, Patna, vol.. III Ms, 392, v.l. सुतप्रदम् for सुखप्रदम् in GNJ Ms 150 36 ''रेखागणित'' of जगन्नाथ Also in Pub. text ''सिद्धान्तसम्राटं, of जगन्नाथसम्राट्, वितण्ड in read as वितुण्ड in the Ms.

36. In GNJ Ms. 15036.

39. *Vide* catal. of GOML Madras Vol. II, Ms 1479. Also *Vide* Catal. of ALRC Adyar, Madras, Vol. IV, Part II, San.c. Ms. 52 with poet's name as भास्कररायदीक्षित.

44. Also in SSRB - 3.22 and SP 89. v.l. गलित for गलद् in Pub. text.

45. *Vide* Catal. of GVL Nepal Vol. II, Ms. प्र 1447.

46. *Vide* Catal of RASB cal. Vol. X, Ms. 7240. भवजलनिधिपारं is read as भवजलपरिवारं in the Ms.

52. Also in the Catal. of BORS, Patna Vol. II.

53. In GNJ Ms. 21806

54. In GNJ Ms 34844. *v.l.* विदध्ये for भिर्ध्येय; तरु for नर and नगेणः for गणेशः in the GNJ Ms 6/1080 ''लीलावती''।

55. *Vide* Catal. of BORS, Patna Vol. I. Ms 146.

57. IN GNJ Ms. 12320.

58. In GNJ Ms. 28537. Also in GNJ Ms. 38747 ''रसरत्नदीपिका' of रामराज S/o रत्नदेव.

59. *Vide* Catal. of GVL Nepal, Part I, Ms 465.

60. In GNJ Ms 26579, *v.l.* स्वगण for स्वजन in Pub. text.

61. In GNJ Ms 23629. Also in GNJ Ms 26938, ''उदाहरणटीका of केशव, v.l. साधित for ठौकित and सिन्दूराभं भजे सततम् for कामरि ... भजत in the Ms.

64. In GNJ Ms. 46602.

65. IN GNJ Ms. 3520. द्योतिताङ्घ्रे; is read as द्योतताङ्घ्रे and क्वचिदपिविकसन् is read as कवचविकसयन् in the Ms.

66. In GNJ Ms 31516. सिद्धिबुद्धिम् is read as सिद्धिबुद्धयम् in the Ms.

67. *Vide* Catal. of RASB, cal. Vol. VIII, Part I, Ms. 8375. सिद्धिबुद्धी is read as सिद्धिबुद्धि, सहचारी as सहचरि, ऋद्धिबुद्धी as ऋद्धिबुद्धि, गेहे as गेह, सदय as सदत्य, जगद as यजद and नन्दकारी is read as नन्दकारि in the Ms.

68. *Vide* Catal. of TML Tanjore, Srirangam Vol. XVII, Ms. 11806.

69. In GNJ Ms. 48780.

70. *Vide* Catal. of GOML, Madras Vol. XII, Ms. 5750.

71. IN GNJ Ms. 25392.

72. In GNJ Ms 19450.

73. Also in SSRB 3.5, Annonymous.

77. IN GNJ Ms 24510. वेतण्ड is read as वेदण्ड in the Ms.
78. *Vide* Catal. of AS cal. Vol. XI, Ms. 8383.
83. In Koni Ins. of Kalacuri PrithVideva (II) in 1147 AD, *Vide* E.I. XXVII PP. 280-281.
86. *Vide* Catal. of GOML Madras, Vol. IV, Ms. 3219.
89. *Vide* Catal. of GOML Madras, Vol. VI, Part I, Ms 5154.
90. In GNJ Ms 28145.
92. In GNJ Ms 15266, *v.l.* प्ररव्य for प्रस्थ, पटिष्ठाय for पटिम्नाय and भुवे for शुचे in the pup. text ''मदनमहार्णवः'' of भट्टविश्वेश्वर.
93. In GNJ Ms 21104.
94. In GNJ Ms 19264.
95. In stone Ins. from Ranod in 1972, *Vide* E.I. I, PP-354 – 355.
96. *Vide* Catal. of GOML Madras Vol. III, Part I san. A, Ms. 2126
97. In GNJ Ms. 13363.
98. *Vide* Catal. of GOML, Madras, Vol. III,Part I, San. A, Ms. 2216.
99. In GNJ Ms 23743.
100. *Vide* Catal. of GOML Madras, Vol. III, Part I, San. B, Ms 2454.
102. *Vide* Catal. of BORS Patna, Vol. III, Ms. 417.
103. *Vide* Catal. of GOML Madras, Vol. V, Part I Ṣan. A, Ms. 4252.
104. *Vide* Catal. of GOML Madras, Vol. IV, Part I San.C, Ms. 4111.
105. *Vide* Catal. of GOML Madras Vol. XI, Ms. 5554.
106. *Vide* Catal. of TML Tanjore, Srirangam Vol. VIII, Ms. 4336.
107. In GNJ Ms. 24853.
110. *Vide* Catal. of GOML Madras, Vol. III, Part I San. A, Ms. 2279.
111. In GNJ Ms. 24169. *v.l.* गलिता for ललिता and संजृम्भितेन for सद्गुञ्जितेन in the Catal. of GOML Madras, Vol. I, Ms 760. Also in GNJ Ms 48672 this Ms drops the word गल and नविनि from the verse.
112. In GNJ Ms. 273.
113. *Vide* Catal. of GVL Nepal Part I, Ms. 474.
116. *Vide* Catal. of BORS, Patna, Vol. IV, Ms. 75.
117. v.l. नरा for परा in the Catal. of GOML Madras, Vol. III. Part I San. B, Ms. 2580.
120. *Vide* Catal. of TML Tanjore, Srirangmam, Vol. VI, Ms. 3798.
121. In GNJ Ms 25090, यो देवै is reas as या देवै.
122. *Vide* Catal. of ALRC Adyar, Madras, Vol. IV, Part II, Ms 3082.
123. In GNJ Ms. 273.
124. In GNJ Ms. 26885. v.l. यमिभिर्ध्येस्तथा योगिभिः for यमिनां मध्ये सदा योगिनां and

सुखदं for सुखदः in the GNJ Ms 27952 ''प्रयोगदर्पण'' of पद्मनाभ S/o गोपाल S/o नारायण v.l. त्रिदशः for त्रिदशैः, यमिभिर्ध्यस्तथायोगिभिः for यमिनां मध्ये सदा योगिनां in GNJ Ms 29401 of the same text In this Ms the ''प्रयोगदर्पणः'' in called as ''सर्वसंस्कारपद्धतिः''.

125. In GNJ Ms. 22034.

126. In GNJ Ms. 24853.

127. In GNJ Ms. 2775.

128. From Ins. of Jaipur district, 1547 AD, *Vide* E.I. XXX, P. 196.

129. From Jaina Ins. in the temple of Neminatha on Mount Abu 1230 AD, *Vide* E.I. VIII, PP. 208-209.

130. From SSRB 5.35, Annonymous.

131. Vitasa grant of Pralaya-Nayaka, 4th cen. AD, *Vide* E.I. XXXII, PP. 259 – 260.

132. From SSRB 3.19.

133. *Vide* Catal. of ALRC Adyar, madras, Vol. IV, Part II, Ms. 13.

134. From SSRB 3.23, Annonymous.

135. From The Garvapadu Grant of Ganapatideva, 1260 AD, *Vide* E.I. XVIII, PP. 349-350.

136. From Bhanpur plates of chhittarajadeva, 1026 AD, *Vide* E.I. XII, P. 261.

137. In GNJ Ms 23920.

138. In GNJ Ms 39309. v.l. तनुजं for तनयं in GNJ Ms 22622 of the same text. Another GNJ Ms 25888 'नवरत्नकम्' gives the poet's father's name as सीताराम and forethehr's name as नृपादेव्यास.

139. In GNJ Ms 23493.

140. IN GNJ Ms 25388 v.l. लब्धा for लुब्धा; विभूषित for विभूषण and ''विघ्नानि वः परिधुनोति स विघ्नराजः'' in the GNJ Ms 40149 of the same text.

141. From Nellore Copper-plate Ins. of Rama Chandra, 1390 AD, *Vide* the ins. of the Nellore district, Vol. I, PP. 5-6.

143. In GNJ Ms 23649, परिचयाद् is read as परियाद् in the Ms.

144. In SSRB 4.27.

146. *Vide* Catal. of GOML Madras, Vol. VI, Part I San. A, Ms 5245.

147. In GNJ Ms 39509.

148. *Vide* Catal. of GOML Madras, Vol. IX, Ms 4565.

150. In GNJ Ms 16706.

151. In GNJ Ms 49351. विलसद् is read as विलद्.

152. In GNJ Ms 25915.

153. In GNJ Ms 17257.

154. In GNJ Ms 16510.

155. *Vide* Catal. of GOML Madras Vol. XIX, Ms 11330. Also in Catal. of GOML Madras, Vol. III, Part I, San A, Ms 2137.

156. In GNJ Ms 18854. विघ्नराजमनिशं is read as विघ्नराजनिशम् in the Ms.

157. *Vide* Catal. of AS. Cal., Vol. XI, Ms 8821.

158. *Vide* Catal. of GOML Madras Vol. IX, Ms. 4524.

159. *Vide* Catal. of BORS Patna, Vol. IV, Ms 27.

160. In GNJ Ms 21159.

163. From SMA 2.50, Ammonyous. v.l. यः कराग्रेण for पुष्कराग्रेण; विश्वं सृजति for तोयं वमति; सकलं for बहुतरं; क्वापीशः for क्वाप्यम्भः and चक्रम् for सत्त्वाः in SSRB 4.30. v.l. तदखिलं for बहुतरं in SP 90. and SS 4.2 V.l. क्वाप्यनन्ताः for क्वाप्यनतः in SS 4.2.

164. From SSRB 4.31, Annoymous.

165. In GNJ Ms 15036.

166. IN GNJ Ms 40505, कण्ठाबद्ध is read as कण्ठः बद्ध and सिद्धाराधितो is read as सिद्धः राधितो in the Ms.

167. In GNJ Ms 17261.

168. From Sakarai stone Ins. 642 AD, *Vide* E.I. XXVII, P. 31, वृहद is emended from the original reading रतीद्र and रेणूद्भट is emended from रेणुद्भट.

169. In GNJ Ms 19018.

171. In GNJ Ms 49253. Also In GNJ Ms 24557 'जन्मपत्रलेखक्रमः' of विश्वनाथ. This Ms reads कुञ्जरस्य for कुञ्जरास्य, ममान्तरः for ममान्तरं; सतानन्द for सततानन्द and महीजः for महीयः. This Ms drops the letter 'द्य' after the word गौरवा.

173. In GNJ Ms 16704.

177. In GNJ Ms 40475, this Ms also called as अभिधानचूडामणिः.

179. In GNJ Ms 39651, तरङ्गावलिवलितवपुः is read as तरङ्गावलितवपुः in the Ms.

180. *Vide* Catal. of RASB Cal. Vol. X, Part I and II Ms. 7163.

182. *Vide* Catal. of RASB Cal. Vol. X, Part II, Ms. 7375.

183. *Vide* Catal. of GOML Madras, Vol. III, Part I San. A, Ms 2182.

184. In GNJ Ms 27233.

185. *Vide* Catal. of BORS Patna, Vol. IV, Ms. 186.

186. From Khalari stone ins. of Haribrahmdeva 1414 AD, *Vide* E.I. II, P. 230.

187. *Vide* Catal. of BORS Patna, Vol. III, Ms 423.

189. From SK 143.

190. *Vide* Catal. of GVL Nepal Part I, Ms तृ 578.

191. From Mahuva (Kathiawada) Ins, 1381 AD, *Vide* N.I.A. Vol. 2, P. 28.
192. From Sarban Ins. in the Delhi Museum, 1328 AD, *Vide* E.I. P. 93.
194. In GNJ Ms 21189 Also In GNJ Ms 12926 ''रुद्रसूत्रम्'' This Ms reads भक्तकल्पमहीरुहम् for लक्ष्मीविष्णवादिभिर्वृतम्.
195. In GNJ Ms 48663.
197. *Vide* Catal. of GOML Madras, Vol.V Part I, San. A, Ms 4159.
198. *Vide* Catal of GOML Madras, Vol. VII Part I Ms 5387.
199. In GNJ Ms 14308, सरसोद्गीत is read as सरसोभाङ्गीत in the Ms.
200. *Vide* Catal. of RASB, Cal. Vol. VIII Part II Ms 4475.
202. *Vide* Catal. of GOML Madras Vol. III Part I, San. A, Ms 2203.
203. In GNJ Ms 23942. Also in GNJ Ms 26460, which reads सदनं for सदानन्दम्.
204. In GNJ Ms 23743.
205. In GNJ Ms 19462
207. In GNJ Ms 17287.
208. In GNJ Ms 52/833.
209. In GNJ Ms 11896. दीव्यत् is read as दिव्यत्; धूली is read as धूलि and प्लावयित्वा as प्लावयत्वा in the Ms v.l. स्यन्दद्गण्ड for स्पन्दग्दण्ड and दान्त for दन्ति In GNJ Ms 19420 of the same text.
210. In GNJ Ms 41498.
211. From SSRB 3.15.
213. *Vide* Catal of BORS, Patna, Vol. I.
215. In GNJ Ms 18252, भाल is read as फाल in the Ms. Also in SSRB 4.32, Where v.l. मिच्छुर्भु for मिच्छन, कृतैर्दू for कृतादू and नुदेद् for नुयाद्.
216. *Vide* Catal. of GOML Madras Vol. III, Ms. 4153. annonymous. Also in GNJ Ms 14458, this Ms gives the poet's name as Mukunda Bhatta. v.l. विघ्नौघदमनो for विघ्नोपशमनो in this Ms.
217. From Stone ins. of Dhangadeva (Khajuraho) 1117 AD, *Vide* E.I.I. P. 140.
219. *Vide* Catal. of GOML Madras, Vol. III, Part I San. B, Ms 2400.
220. From Srirangama Plates of Mallikarjuna 1462 AD, *Vide* E.I. XVI, PP. 347-348.
221. Also In GNJ Ms 22543 ''सर्वसंस्कारभास्करम्'' of भट्टमयूरसुतराम-कृष्णशर्मा and GNJ Ms 25392. This Ms reads ईषत् for सेषत् v.l. शेषरित्स्मतं for सेषत्सिमतं in GNJ Ms 25392 of the same text.
222. *Vide* Catal. of GOML Madras Vol. VI, Part I San B. Ms 5195.
224. In GNJ Ms 30009. Ms drops the word परि.
227. *Vide* Catal. of Al Adyar, Vol. VI, Ms. 155.

228. In GNJ Ms 23699 and also GNJ Ms 48780 ''दानसिन्धुः'', this Ms drops the word तं in fourth Pada.

230. From SSRB 3.24.

231. From Mount Abu Ins. of Samarsinha, 1285 AD, *Vide* I.A. Vol. XVI, P. 347.

233. Kondukuru plates of Allaya Dodda, 1430 AD, *Vide* E.I. V. P. 57.

234. Grant of Ganadeva of Kondavidu, 1455 AD, *Vide* I.A. Vol. XX, P. 391.

235. *Vide* Catal. of GOML Madras Vol. VI Part I, Ms No. 5139 and 5282 by vyasa and others.

236. In GNJ Ms 31578,

238. In GNJ Ms 15276.

240. From SSRB 4.33.

241. In GNJ Ms 23649, the Ms reads दधानाः and प्रख for दधानः and प्रेङ्ख. The Ms also omits the word वर्द्धि after the word स्पर्द्धि This verse also occurs in SMA 23, attributed to Visvesvara.Also in SSRB 4.28, Anonymous.

242. *Vide* Catal. of GVL nepal, Vol. II Ms 4.

244. *Vide* Catal. of BORS, Patna Vol. III, Ms 321.

246 From first and third slabs of Kumbhalgarh ins. 1460 AD, *Vide* E.I. XXIV, PP. 314-315.

247. In GNJ Ms 36300.

253. *Vide* Catal. of GOML Madras, Vol. III Part I, San. B, Ms 2505.

254. In GNJ Ms 3514.

259. From SSRB 2.3

260. *Vide* Catal. of GOML Madras, Vol. XI, R. No. 5538.

261. From Ganapesvaram Ins. of Ganapati, 1231 AD, *Vide* E.I. III P. 84.

262. *Vide* Catal. of GOML Madras, Vol. VI, Part I, San. A, R. No. 5260.

263. From Velicherla Grant of Prataparudra Gajapati, 1511 AD, *Vide* JAHRS Vol. XI Pts 1 & 2 P. 55.

264. In GNJ Ms 31567.

265. *Vide* Catal. of AS cal. Vol. XI, R.No. 7827. करेणुवदनः is read as वरेणवदनः in the Ms.

266. *Vide* Catal. of GOML Madras, Vol. XVIII, R.No. 9412.

267. *Vide* Catal. of AL, Adyar, Vol. VI, R. No. 590.

268. In GNJ Ms 30111.

269. *Vide* Catal. of BORS Patna, Vol. III, R.No. 400.

270. From Jagannatharaya Temple Ins. at Udaipur, 1652 AD, *Vide* E.I. XXIV, P. 65.

272. In GNJ Ms 16262.

274. Also In GNJ Ms 28157 'सुभाषितपद्धतिः' of श्रीपतिः v.l. विसृजत् for विसृजन्.
275. *Vide* Catal. of AL Adyar, Vol. VI, R.No. 963.
276. *Vide* Catal. of MPL Trivendrum, Vol. I, R.No. 147.
278. Also in SSRB 4.26.
280. In GNJ Ms 31784. भ्रमरविततिगुञ्जा is read as भ्रमरतिवद्गुञ्जा in the Ms.
283. From SMA 2.49.
284. Also In GNJ Ms 25392, तन्त्र is read as तत्र in the Ms.
285. Also in ''पीयूषधाराव्याख्या'' of मुहूर्त्तचिन्तामणि by राम. सकल and मपिपरं are read as निखिल अनुदिनं in SSRB -3.25.
286. From SSRB 3.17
287. Also in SSRB 3.20, here क्रीडावदान is read as क्रीडावदात.
288. From Sanskrit Ins. of Gujarat Kings, 1354 AD, *Vide* I.A. Vol. XI, P. 102.
289. From SSRB 3.10.
291. From SSRB 4.29.
293. In GNJ Ms 12034, पर्शु and गणनाथं are read as परशु and गननाथं in the Ms.
295. In GNJ Ms 40147.
296. In GNJ Ms 44720.
297. In GNJ Ms 18662.
299. From SMA 2.45. Also in SA 80, Anonymous and SS 4.82.
300. From Donependu grant of Namaya Nayaka 1338 AD *Vide* E.I. IV, P. 358.
301. In GNJ Ms 1226.
302. From Pentapadu grant of Choda Bhaktirja 1343 AD *Vide* E.I. XXXIII, P. 226.
308. In GNJ Ms 20502.
309. In GNJ Ms 18290.
312. In GNJ Ms 33010.
313. From SSRB 3.12, Anonymous.
315. In GNJ Ms 3607.
317. *Vide* Catal. of TML Srirangam, Vol. XVII. R.No. 11806.
323. From Circa Ins. 1417 AD.
324. In GNJ Ms 24206.
325. *Vide* Catal. of BORS Patna, Vol. III, R.No. 326.
326. From Srirangam Plates of Mummadi Nayaka 1358 AD, *Vide* E.I. XIV PP. 89-90. द्यूत is emended from the original reading द्युत, दन्त from दत, पुत्रमुमैक from पुत्रमूमैक, स from सा and दयितागृहीता from दयिताहीहृता.
327. From Karnabal stone Ins. of Jayasimhadeva 12th cen. A.D.

